## 1.1.व्याकरणमाहात्म्यम्

सर्वमपि ज्ञानम् अस्माकं वेदेषु निहितं वर्तते । वेदेष्वेव च सर्वधर्ममूलत्वमस्ति । यथोक्तम् –

**वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।**

**आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ।।**[1]

वेदाङ्गानि षट् कीर्तितानि सन्ति । तानि षडङ्गानि षट्शास्त्राण्येव वर्तन्ते। यथोक्तम् –

**छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते ।**

**ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ।।**

**शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् ।**

**तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते ।।**[2]

एतदेव शब्दान्तरैरपि उपलभ्यते शब्दकौस्तुभे -

**मुखं व्याकरणं तस्य ज्योतिषं नेत्रमुच्यते ।**

**निरुक्तं श्रोत्रमुद्दिष्टं छन्दसां विचितिः पदे ।।**

**शिक्षा घ्राणं तु वेदस्य हस्तौ कल्पान् प्रचक्षते ।।**[3]

यतो हि व्याकरणं वेदानां मुखत्वेन स्वीकृतमस्ति , अतः षट्सु अङ्गेषु अस्य प्राधान्यं स्पष्टमेव । यथोक्तं महाभाष्ये – **प्रधानं च षट्स्वङ्गेषु व्याकरणम्**[4] इति । न केवलं वेदानामर्थज्ञानायैव व्याकरणज्ञानस्य आवश्यकता अपितु सर्वेषामेव शास्त्राणां विज्ञानाय एतच्छास्त्रमुपकारकमस्ति । यतो हि सर्वाणि शास्त्राणि शब्दमयानि सन्ति , तेषां च बोधः विना शब्दशास्त्रेण कथं भवितुं शक्येत । पदसाधुत्वकरं शास्त्रमेतदस्ति , यथोक्तम् –

---

[1] मनु.स्मृ. 2-6

[2] पा.शि.41-42

[3] श.कौ.पस्प. 11 पृ.

[4] म.भा.पस्प.

**पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम् ।**

**सर्वोपकारकं ग्राह्यं कृत्स्नं, त्याज्यं न किञ्चन ।।**[5]

अर्थात् एतत् शास्त्रं सम्पूर्णतया एवाध्येतव्यम् । किञ्चन अपि न हेयम् । यतो ह्येतत्पदानां साधुत्वविज्ञापकं शास्त्रम् अस्ति । अस्मिन् संसारे कानिचित् शास्त्राणि लौकिकप्रयोजनवन्ति कानिचिच्च अलौकिकप्रयोजनवन्ति । यथा वेदान्तसाङ्ख्यादीनि दर्शनशास्त्राणि केवलानि अलौकिकप्रयोजनसाधकानि सन्ति । एवञ्च वैद्यकशास्त्रम् अश्वशास्त्रम् इत्यादीनि शास्त्राणि केवलानि लौकिकप्रयोजनसिद्धिकराणि सन्ति । किन्तु व्याकरणं शास्त्रम् उभयविधप्रयोजनसिद्धिकरम् अस्ति । शब्दसाधुत्वमस्य लौकिकं प्रयोजनमस्ति , तथा च शब्दब्रह्मरूपस्य परमात्मनः प्राप्तिः अस्य अलोकिकं प्रयोजनमस्ति । अतः अस्य अध्ययनं सर्वेषां कृते अतीव आवश्यकं वर्तते । यथोक्तम् –

**यद्यपि बहु नाधीषे तथापि पठ पुत्र व्याकरणम् ।**

**स्वजनः श्वजनो मा भूत् सकलं शकलं सकृच्छकृत् ।।**

तथैव च पदमञ्जर्यामप्युक्तम् –

**उपासनीयं यत्नेन शास्त्रं व्याकरणं महत् ।**

**प्रदीपभूतं सर्वासां विद्यानां यदवस्थितम् ।।**[6]

व्याकरणस्य ज्ञानानन्तरमेव मनुष्यः कस्याप्यन्यस्य शास्त्रस्य पठनाधिकारी भवति । यथोक्तं भास्कराचार्येण -

**यो वेद वेदवदनं सदनं हि सम्यग् ब्राह्म्या स वेदमपि वेद किमन्यशास्त्रैः ।**

**यस्मादतः प्रथममेतदधीत्य धीमान् शास्त्रान्तरस्य भवति श्रवणेऽधिकारी ।।**[7]

---

[5] न्या.सि.मु.266 पृ.

[6] पदमञ्जर्याम् अथ शब्दानुशासनम् इत्यवसरे ।

[7] सिद्धान्तशिरोमणौ मङ्गलश्लोकः

अतः व्याकरणस्य अध्ययनेन सर्वेषामेव शास्त्राणां पठने सौकर्यं भवति , यतो हि अर्थज्ञानद्वारा सर्वत्र प्रवेशः सुलभो भवति तस्य । महाभाष्ये चोक्तम् – **सर्ववेदपरिषदं हीदं शास्त्रम् । तत्र नैकः पन्थाः आस्थातुम् ।**[8] एवञ्च ये व्याकरणस्य अध्ययनेन पवित्रवाचो जनाः ते देवतातुल्या प्रोक्ताः –

**रूपान्तरेण ते देवाः विचरन्ति महीतले।**

**ये व्याकरणसंस्कारपवित्रितमुखाः नराः ।।**[9]

नवविधेषु व्याकरणेषु पाणिनीयं व्याकरणमेव प्राशस्त्यमावहति । महाभाष्यकारेण महर्षिपतञ्जलिनाऽपि पाणिनिव्याकरण्स्य महती प्रशंसा कृता – **प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचावकाशे प्राङ्मुख उपविश्य महता प्रयत्नेन सूत्राणि प्रणयति स्म , तत्राशक्यं वर्णेऽप्यनर्थेन भवितुम्, किं पुनरियता सूत्रेण**[10] इति । मुख्यरूपेण शब्दानामनुशासनमेव व्याकरणस्य प्रयोजनमस्ति । यथा च भाष्ये – **अथ शब्दानुशासनम्**[11] । पाणिनीयं यद् व्याकरणं वर्तते तदाश्रित्य कात्यायनेन वार्तिकानि महर्षिपतञ्जलिना महाभाष्यं च विरचितम् । श्रीमता पतञ्जलिना प्रोक्तमस्ति यद् एकोऽपि शब्दो यदि सुष्ठुरूपेण ज्ञातः प्रयुक्तश्च स्यात् स स्वर्गे लोके कामधुग्भवति – **एकः शब्दः सम्यग् ज्ञातः सुष्ठुः प्रयुक्तः स्वर्गे लोके स कामधुग्भवति ।**[12] महाभाष्ये न केवलं रक्षोहागमलघ्वसन्देहाः प्रयोजनम् इत्येतदुक्त्वा मुख्यानि प्रयोजनानि प्रोक्तानि, अपितु **तेऽसुरा हेलयो हेलय इति कृत्वा पराबभूवुः**[13] इत्यादिरूपेण गौणानि प्रयोजनान्यप्युक्तानि । एवञ्च श्रीमद्भर्तृहरिः वाक्यपदीये व्याकरण्स्य दार्शनिकं रूपमपि दर्शितवान् । तेन वाक्यपदीयस्य प्रारम्भिके श्लोक एव शब्दब्रह्मणः वन्दनं कृतम् –

---

[8] म.भा.2-1-58

[9] पदमञ्जर्याम् अथ शब्दानुशासनम् इत्यत्र ।

[10] म.भा. वृद्धिरेचि इति सूत्रे 1-1-1

[11] म.भा.पस्प.

[12] म.भा.पस्प.

[13] तत्रैव

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।**

**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ।।**[14]

एतदनुसृत्य एतज्जगत् शब्दब्रह्मणः विवर्तभावेन अवस्थितमस्ति । यदि अस्मिन् संसारे व्याकरणरूपः प्रकाशो न स्यात् तर्हि एतत्सकलं जगत् तमसावृतं जायेत ।

एतद्व्याकरणं न केवलं शब्दसाधुत्वकरं शास्त्रम् अपितु तपसाम् उत्तमं तपो वर्तते । एतदेव छन्दसाम् अर्थात् वेदानां प्रथमं अर्थात् प्रधानं प्रोक्तमस्ति –

**आसन्नं ब्रह्मणस्तस्य तपसामुत्तमं तपः ।**

**प्रथमं छन्दसामङ्गं प्रहुर्व्याकरणं बुधाः ।।**[15]

एवञ्च व्याकरणं शास्त्रं वाङ्मलानां चिकित्सारूपेण अस्ति ।सर्वासु विद्यासु पवित्रा विद्या प्रोक्ता शब्दशास्त्रस्य तथा चेदं अपवर्गरूपं फलं प्रापयति –

**तद्द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम् ।**

**पवित्रं सर्वविद्यानाम् अधिविद्यं प्रकाशते ।।**[16]

अधिकेन किम् । अस्मिन् संसारे अस्माकं यत् परमं प्रयोजनं वर्तते मोक्षप्राप्तिः , व्याकरणेन तदपि शक्यम् –

**इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम् ।**

**इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः ।।**[17]

**तथैव –**

**इदं व्याकरणमागत्य परं ब्रह्माधिगम्यते ।**[18]

---

[14] वाक्य.प.1-1

[15] वाक्य.प.1-11

[16] वाक्य.प.1-14

[17] वाक्य.प.1-16

एवं वयं वक्तुं शक्नुमो यद् व्याकरणशास्त्रं न केवलं शब्दानां सिद्धिकरं लौकिकप्रयोजनसाधकं च शास्त्रम् अपितु शब्दब्रह्मसाक्षात्कारेण मोक्षप्रदायकम् अपि एतच्छास्त्रं सर्वदा लोकस्य कल्याणकारकम् इत्यत्र नास्ति सन्देहः ।

## 1.2. वैयाकरणसिद्धान्तकौमुद्यास्सामान्यपरिचयः -

अष्टाध्याय्याः कार्यकालविधिमाश्रित्य रचितेषु ग्रन्थेषु यत्स्थानं वैयाकरणसिद्धान्तकौमुद्या प्राप्तं या च चिरस्था कीर्तिस्तया लब्धा, तदवश्यमेव ग्रन्थकर्तुः पुण्यकर्तृत्त्वं सूचयति । अष्टाध्यायीस्थानां सूत्राणामस्मिन् ग्रन्थे कश्चिद्विशिष्ट एव क्रमो व्यवस्थापितः। कौमुद्याः लोकप्रियत्त्वमनेन पद्येन ज्ञातुं शक्यते -

**कौमुदी यदि कण्ठस्था वृथा भाष्ये परिश्रमः।**

**कौमुदी यद्यकण्ठस्था वृथा भाष्ये परिश्रमः।।**

कौमुदी चेयं चतुर्दशप्रकरणविभक्ताऽस्ति । तानि च - सञ्ज्ञा-परिभाषा- सन्धि- सुबन्त- अव्यय -स्त्रीप्रत्यय-कारक-समास-तद्धित-तिङन्त-प्रक्रिया-कृदन्त - वैदिक-स्वर-नामधेयानि सन्ति । अस्मिन् बिन्दौ मया वैयाकरणकौमुदीस्थस्वरप्रक्रियाया अत्र परिचयोऽपि प्रस्तूयते ।

**वैयाकरणसिद्धान्तकौमुद्याः परिचयः –**

लौकिकवैदिकशब्दसाधनाय शुद्धतया प्रयोक्तुञ्च नास्ति कोऽपि व्याकरणादृते सूपायः। पाणिनीयं च तद्धि प्राशस्त्यमावहत्याधुनिके युगे । पाणिन्यष्टाध्याय्यां सूत्रबद्धं यद् रूपं प्राप्यते तत्प्रशंस्यमस्त्येव । तामेवाष्टाध्यायीमधिकृत्य कात्यायेन वार्तिकानि, पतञ्जलिना महाभाष्यञ्च निर्मितम् । एतत्प्रकारिकी चाध्ययनाध्यापनपरम्परा बहुकालं यावच्छात्रशिक्षकमण्डले मण्डनायिताऽभूत् । ततः कार्यकालविधिमनुसृत्य वुधैः अष्टाध्याय्याः सूत्राण्यधिकृत्य नैके प्रक्रियाग्रन्थाः विरचिताः। अस्माभिस्ते यथाऽऽलोडितशास्त्रं परिचीयन्ते, अत्र आदौ ग्रन्थस्तदग्रे तस्य कर्तुश्च नाम अस्ति –

---

[18] तत्रैव 1-22

| | | |
|---|---|---|
| 1 | रूपावतारः | धर्मकीर्तिः |
| 2 | प्रक्रियारत्नम् | अज्ञातनामा |
| 3 | रूपमाला | विमलसरस्वती |
| 4 | प्रक्रियाकौमुदी | रामचन्द्राचार्यः |
| 5 | वैयाकरणसिद्धान्तकौमुदी | भट्टोजिदीक्षितः |
| 6 | प्रक्रियासर्वस्वम् | नारायणभट्टः |
| 7 | मध्यसिद्धान्तकौमुदी | वरदराजः |
| 8 | लघुसिद्धान्तकौमुदी | वरदराजः |
| 9 | सारसिद्धान्तकौमुदी | वरदराजः |
| 10 | गीर्वाणपदमञ्जरी | वरदराजः |

प्रक्रियापद्धतिसम्बद्धमेतद् वर्णनं युधिष्ठिरमीमांसककृते संस्कृतस्येतिहासे लभ्यते । वैयाकरणासिद्धान्तकौमुद्याः आधारभूतग्रन्थः प्रक्रियाकौमुदी अस्ति । अस्मिन् ग्रन्थे अष्टाध्याय्याः सूत्राणां सन्निवेशस्तत्तत्प्रकरणेषु कृतोऽस्ति । प्रक्रियापद्धत्याः चरमोत्कर्षोऽस्मिन्नेव ग्रन्थे प्राप्यते । यद्यपि प्रक्रियाकौमुदी सिद्धान्तकौमुद्याः आधारग्रन्थस्तथापि, स्वमौलिकोद्भावनाभावितत्वेन नैकप्रकारकतथ्यख्यापनत्वात्, स्वविशिष्टशैलीसरणाच्चापि ग्रन्थेनानेन सर्वेऽपि पूर्ववर्तिनः प्रक्रियाग्रन्थास्तिरोहिताः।

**सिद्धान्तकौमुद्याः विषयवस्तु -**

अस्मिन् ग्रन्थे पाणिनीयसूत्राणां समावेशः भट्टोजिदीक्षितेन स्वकीयया नव्यपद्धत्या अनुसारेण कृतः। अत्र ग्रन्थे चतुर्दशप्रकरणानि सन्ति, तानि चेमानि –

| | |
|---|---|
| 1 | संज्ञा |
| 2 | परिभाषा |
| 3 | सन्धिः |
| 4 | सुबन्तः |
| 5 | अव्ययम् |
| 6 | स्त्रीप्रत्ययः |
| 7 | कारकः |

| | |
|---|---|
| 8 | समासः |
| 9 | तद्धितः |
| 10 | द्विरुक्तम् |
| 11 | तिङन्तः |
| 12 | कृदन्तः |
| 13 | वैदिकः |
| 14 | स्वरः |

**सिद्धान्तकौमुद्याः वैशिष्ट्यानि -**

1.अत्र प्रक्रियाक्रमेण सर्वाणि सूत्राण्युपबृंहितानि सन्ति ।

2.मूलकौमुद्यां सूत्रसङ्ख्या 3386 अस्ति , वैदिकीप्रक्रियायां 263 स्वरप्रक्रियायाञ्च 329 सूत्राणि सन्ति। प्रत्याहारसूत्रैस्सह सर्वाणि सूत्राणि 3992 इति सङ्ख्यकानि भवन्ति ।

3. सिद्धान्तकौमुद्यां यथोत्तरं मुनीनां प्रामाण्यम् , इत्यस्य प्रभावो सर्वत्र परिलक्ष्यते। अस्मिन् विषये प्रायः क्वचिदपि सामञ्जसस्यावकाशो नास्ति।

4. अपाणिनीयाः प्रयोगाः कौमुदीकारेण अपशब्दाः मताः, अतः प्रक्रियाकौमुदीकार-काशिकाकारप्रभृतिमूर्धन्यवैयाकरणानामपि प्रबलखण्डनं कृतम् ।

5. पञ्चाङ्गं व्याकरणम् इत्यस्य पारम्परिकरीत्यानुसरणैः खिलपाठा अपि निवेशिताः।

6. सुप्तिङ्चयो वाक्यम् इत्यनुसृत्य पूर्वार्धे उत्तरार्धे च अत्यन्तव्यवस्थितप्रक्रियाक्रमो निर्धारितः।

7.व्याकरणस्य च यो मुख्योद्देश्यः शब्दानां सिद्धिः, सा कुत्राप्यत्र न तिरोहिता ।

8. सूत्रव्याख्यागतपङ्क्तयः, फक्किकाश्च ग्रन्थस्यास्य शोभां वर्धयन्ति।

9. धात्वर्थैः, पाठान्तरैः, विवेचनैः यथोचितपरिभाषासन्निवेशनैश्च विभूषितेयं कौमुदी, उणाद्यलङ्कृताऽप्यस्ति ।

10.उणादिपाठस्य सम्पादितं सुन्दञ्च रूपमत्रोपलब्धम्।

11.व्याख्याने काशिकाय़ाः , उदाहरणेषु च प्रक्रियाकौमुद्याः अनुकरणमत्र कृतमस्ति।

12.वार्तिकानां, परिभाषाणां, विविधकोशग्रन्थानां च समावेशोऽस्य ग्रन्थस्य महत्तां वर्धते।

13.प्रक्रियया सार्धमेव व्याकरणासिद्धान्तसमन्वयनैरस्य नामसार्थक्यमपि भवति।

**वैयाकरणसिद्धान्तकौमुद्यां स्वरप्रक्रियायाः संक्षिप्तरूपेण दिग्दर्शनम् –**

सिद्धान्तकौमुद्यां यथा लौकिकशब्दानां सिद्धिः कृता तथैव वैदिकीप्रकरणे वैदिकशब्दानां सिद्धिः कृता। एवञ्च स्वरप्रकरणे तत्र धातूनां समासानां प्रत्ययादीनां च स्वराः अपि साधिताः सन्ति। आदौ तत्र साधारणस्वराः प्रोक्ताः यत्र सामान्यरूपेण स्वराः प्रोक्ताः। तत्रैव एकश्रुतिसम्बन्धिस्वराणामपि विवेचनं प्राप्यते। यथा – एकश्रुतिः दूरात्सम्बुद्धौ[19] स्वरितात्संहितायामनुदात्तानाम्[20] यज्ञकर्मण्यजपन्यूङ्खसामसु[21] इत्यादीनि सूत्राणि एकश्रुतिस्वरसम्बद्धानि सन्ति। अत्रैव च द्वित्राणि आमन्त्रितस्वरसाधकानि सूत्राण्यपि निर्दिष्टानि सन्ति,केचिच्च तिङन्तस्वरप्रकरणे अपि आमन्त्रितस्वरसूत्राणि सन्ति। प्रकरणरूपेण सर्वप्रथमं धातुस्वराः प्रोक्ताः सन्ति। अत्र सामान्यरूपेण नियमः कृतः अस्ति यत् धातूनामन्तः उदात्तो भवति धातोः[22] इति सूत्रेण। इतोऽनन्तरं स्वपादिर्हिंसामच्यनिटि[23] अभ्यस्तानामादिः[24] अचः कर्तृयकि[25] इत्यादीनि सूत्राणि अपि धातुस्वरं निर्दिशन्ति। ततोऽत्र प्रातिपदिकस्वराणां निर्देशः कृतः अस्ति यथा आदौ सूत्रमस्ति – कर्षात्त्वतो घञोऽन्त उदात्तः[26] कर्षतेर्धातोराकारवतश्च घञन्तस्य अन्तोदात्तविधानं करोति सूत्रमेतत्। यथा- कर्षः- इह कर्षधातुरस्ति अतः अनेनात्र अन्तोदात्तविधानं कृतम्। एवमेव उञ्छादीनां च[27] चतुरः शसि[28] इत्यादीनि सूत्राणि सन्ति यैः

---

19 पा.सू.1-2-33

20 पा.सू.1-2-39

21 पा.सू.1-2-34

22 पा.सू.6-1-162

23 पा.सू.6-1-188

24 पा.सू. 6-1-189

25 पा.सू. 6-1-195

26 पा.सू. 6-1-159

27 पा.सू.6-1-160

28 पा.सू.6-1-167

प्रातिपदिकस्य स्वरनिर्देशो भवति। अत्र प्रतिपदं नामपूर्वकम् अपि शब्दानां ग्रहणं कृतमस्ति अतः एतत्प्रकरणं प्रातिपदिकस्वरप्रकरणनाम्ना प्रसिद्धमस्ति। यथा –पथिमथोः सर्वनामस्थानम्[29]

क्षयो निवासे[30] इत्यादीनि। इतोनन्तरं सिद्धान्तकौमुद्यां फिट्सूत्राणां निर्देशः कृतः अस्ति। फिट्सूत्राणि शान्तनवाचार्यप्रणीतानि सन्ति। फिट् इति प्रातिपदिकसंज्ञा अस्ति प्राचां शाब्दिकानां मते। एतानि फिट्सूत्राणि चतुर्षु पादेषु विभक्तानि सन्ति। तत्र च प्रथमे पादे फिषाम् अर्थात् प्रातिपदिकानां अन्तोदात्तविधायकानि सूत्राणि प्रोक्तानि। यथा - फिषोऽन्त उदात्तः[31] एतत्सामान्यनियमकारी सूत्रं वर्तते। इतोऽनन्तरं पाटलापालङ्काम्बासागरार्थानाम्32 गेहार्थानामस्त्रियाम्33 गुदस्य च34 इत्यादीनि सूत्राणि वर्तन्ते। एषु नामग्रहणपूर्वकं स्वरविधानं कृतमस्ति। द्वितीये पादे आद्युदात्तविधानकराणि सूत्राणि वर्तन्ते। तृतीये पादे आदिर्द्वितीयो वा उदात्तः क्रियते। चतुर्थे पादे च पर्यायेण प्रत्यक्षरम् उदात्तः क्रियते। एतेन अत्र फिट्सूत्रेषु एकस्मिन् पादे बाध्यशास्त्रमस्ति अपरस्मिन् च बाधकशास्त्रमस्ति। ततः परं कौमुद्यां प्रत्ययस्वराणां प्रकरणमस्ति। सामान्यरूपेणात्र नियमकारी सूत्रमस्ति - आद्युदात्तश्च35 इत्यनेन नियमः क्रियते – प्रत्ययः आद्युदात्तः एव भवेत्। यथा – कर्तव्यम् – अत्र तव्यत् प्रत्ययः आद्युदात्तः एव अस्ति। अर्थात् ककारोत्तरवर्ति तकारः उदात्तः अस्ति अत्र। ततश्च सामान्यनियमस्य अपवादभूतानि सूत्राणि सन्ति - अनुदात्तौ सुप्पितौ36 चितः37 तद्धितस्य38 कितः39 इत्यादीनि सूत्राणि सन्ति यानि प्रत्ययस्यैव स्वरं निर्दिशन्ति। इतः परं समासस्वरप्रकरणं वर्तते। अत्र वैशिष्ट्यमिदम् अस्ति यदत्र सर्वेषां समासस्वरसम्बद्धसूत्राणां निर्देशः अष्टाध्यायीग्रन्थस्य अनुसारेण एव सर्वेषां समासानां स्वराः एकत्र एव प्रोक्ताः न तु नव्यकौमुदीवत् पृथक् पृथक् अत्र प्रत्येकं समासस्य स्वरनिर्देशः। अत्र सामान्यनियमकारी सूत्रमस्ति समासस्य40 इत्यनेन

---

[29] पा.सू.6-1-199

[30] पा.सू.6-1-201

[31] फि.सू.1

[32] फि.सू.2

[33] फि.सू.3

[34] फि.सू.4

[35] पा.सू.3-1-3

[36] पा.सू.3-1-4

[37] पा.सू.6-1-163

[38] तत्रैव 6-1-164

[39] तत्रैव 6-1-165

[40] पा.सू.6-1-223

समासस्य अन्तोदात्तविधानं क्रियते । इतः परं तदपवादत्वेन बहुव्रीहौ प्रकृत्या पूर्वपदम्41 इति सूत्रमस्ति । एतदनुसृत्य बहुव्रीहिसमासे पूर्वपदस्य प्रकृतिस्वरः भवति । सिद्धान्तकौमुद्याम् आदौ सर्वेषां समासानां प्रकृतिस्वरविषयकाणां सूत्राणां व्याख्यानमस्ति । ततः आदिरुदात्तः[42] इत्यधिकारसूत्रद्वारा आद्युदात्तस्य अधिकारः प्रारभ्यते सर्वेषां समासानाम् । ततः अन्तः[43] इत्यनेन अन्तोदात्तस्य अधिकारः प्रारभ्यते । सर्वं गुणकार्त्स्न्ये[44] संज्ञायां गिरिनिकाययोः[45] कुमार्यां वयसि[46] इत्यादीनि सूत्राणि सर्वेषां समासानां पूर्वपदस्य अन्तोदात्तविधायकानि सन्ति । बहुव्रीहौ विश्वं संज्ञायाम्[47] इति सूत्रम् अत्र बहुव्रीहिविषयकम् अपि अस्ति पूर्वपदस्य अन्तोदात्तविधायकम् । ततः उत्तरपदादिः[48] इति सूत्रस्य अधिकारः प्रारभ्यते । इतोनन्तरं सूत्रैः समासे उत्तरपदस्य आद्युदात्तः विधीयते । यथा- कर्णो वर्णलक्षणात्[49] सञ्ज्ञौपम्ययोश्च[50] इत्यादीनि । अत्र सूत्राणां वैशिष्ट्यमेतदपि अस्ति यत् समासेषु विशिष्टशब्दस्य नामग्रहणपूर्वकम् अपि स्वरविधानं कृतमस्ति । यथा – वीरवीर्यौ च[51] कन्था च[52] इत्यादयः । ततः परं अन्तः[53] इत्यस्य अधिकारत्वेन इतोSनन्तरं यानि सूत्राणि सन्ति तानि समासे उत्तरपदस्य अन्तोदात्तविधायकानि सन्ति । यथा – वा जाते[54] मुखं स्वाङ्गम्[55] इत्यादीनि । अत्रैव गतिसमासस्य अपि उत्तरपदान्तोदात्तं विधीयते । एतत्प्रकारेण वयं पश्यामो यत् सिद्धान्तकौमुद्यां समसास्वराणां विशिष्टं व्याख्यानं प्राप्यते । इतः परं तत्र तिङन्तस्वराणां प्रकरणम् अस्ति । अत्र आदौ तिङन्तस्य सामान्यनियमरूपेण द्वाभ्यां सूत्राभ्यां निघातस्य नियमः कृतः अस्ति । उदात्तादि-हननपूर्वकमनुदात्तकरणं निघातः इति मनोरमायां लिखितम् अस्ति । तिङो गोत्रादीनि

---

[41] पा.सू.6-2-1

[42]. पा.सू. 6-2-64

[43] पा.सू.6-2-92

[44] पा.सू.6-2-93

[45] पा.सू.6-2-94

[46] पा.सू.6-2-95

[47] पा.सू.6-2-106

[48] पा.सू.6-2-111

[49] पा.सू.6-2-112

[50] पा.सू.6-2-113

[51] पा.सू.6-2-120

[52] पा.सू.6-2-124

[53] पा.सू.6-2-143

[54] पा.सू.6-2-171

[55].पा.सू.6-2-167

कुत्सनाभीक्ष्ण्ययोः[56] इति सूत्रं तिङन्तपदात् परं गोत्रादीनि सर्वानुदात्तानि करोति कुत्सने आभीक्ष्ण्ये च अर्थे द्योत्ये। उदाहरण् अस्ति - कुत्सनस्य - पचति गोत्रम्। अत्र पचति इति कुत्सार्थे अस्ति। अस्य शेखरटीकायां प्रोक्तम् अस्ति - स्वकुलं पीडयतीत्यर्थः।[57] तथा च पचति पचति गोत्रम् – इह आभीक्ष्ण्यम् अर्थो वर्तते। धातूनामनेकार्थत्वात् अत्र पचिधातुः करोत्यर्थे वर्तते। विवाहादौ गोत्रं पुनः पुनः सुखीकरोतीत्यर्थः।[58] अतः प्रस्तुतसूत्रेण अत्र सर्वानुदात्तत्वं कृतम्। तथैव च निघातकरं सूत्रम् अस्ति - तिङ्ङतिङः[59] इति सूत्रस्य अनुसारं अतिङः परस्य तिङन्तस्य निघातो भवति। यथा - अग्निमीले। इतः परं निघातनिषेधकानामेव सूत्राणां प्रवचनं सम्पूर्णे अत्र प्रकरणे कृतमस्ति।

एतत्प्रकारेण वयं पश्यामो यत् सिद्धान्तकौमुद्यां समृद्धरूपेण स्वरप्रक्रिया समुद्गुम्फिता अस्ति। तत्र स्वरनिर्देशस्य प्रायः सर्वे पक्षाः पाणिनीयदिशा साधुतया प्रकाशिताः। तेन स्वरजिज्ञासुभ्यः सिद्धान्तकौमुद्याः स्वरात्मको भागः अतीव महत्त्वपूर्णः अस्ति।

**निष्कर्षः** – एवं वयं पश्यामो यत् सिद्धान्तकौमुदीग्रन्थः कश्चित् प्रथितयशस्कः व्याकरणसम्बद्धभ्रान्तिध्वंसको ग्रन्थो वर्तते। अस्य पठनेन अध्येता न केवलं लौकिकानाम् अपितु वैदिकानां शब्दानां स्वराणां च सिद्धिं कर्तुं शक्नोति इति अस्य ग्रन्थस्य महिमा अद्यत्वे सर्वैरेव ज्ञायते।

## 1.3. वैयाकरणसिद्धान्तकौमुदीकर्तुः सामान्यपरिचयः

व्याकरणशास्त्रस्य प्रक्रियाप्रणाल्यां यद्यपि बहवो ग्रन्थाः विरचिताः, किन्तु सर्वाधिकलोकप्रियत्त्वं येन लब्धं, स ग्रन्थः वैयाकरणसिद्धान्तकौमुदी अस्ति। अस्य कर्ता वैयाकरणमूर्धन्यः श्रीभट्टोजिदीक्षितोऽस्ति। अद्यत्वे श्रीमद्भट्टोजिदीक्षितस्य नाम शाब्दिकसमाजे अत्यन्तं प्रसिद्धमस्ति। स न केवलं व्याकरणशास्त्रस्य अपितु अन्येषामपि शास्त्राणां महान् विद्वान् आसीत्

---

[56] पा.सू.8-1-27

[57] वै.सि.कौ.शे. 696 पृ.

[58] तत्रैव

[59] पा.सू. 8-1-28

इति तद्विरचितग्रन्थानुशीलनैस्स्पष्टीभवति । अधुना तेषां विषये एव वयं अधीतानाम् इतिहासग्रन्थानाम् आधारेण ज्ञातुं प्रयत्नं कुर्मः ।

**परिचयः -** श्रीभट्टोजिदीक्षितः महाराष्ट्रियो ब्राह्मण आसीत्। अस्य जनकश्श्रीलक्ष्मीधरभट्टः[60], भ्राता रङ्गोजिभट्टः सुतौ भानुजिदीक्षितवीरेश्वरदीक्षितौ चास्ताम् ।

**गुरुः -** पण्डितराजजगन्नाथकृतेन "प्रौढमनोरमाखण्डनेन" प्रतीयते यत् भट्टोजिना नृसिंहसुतात् शेषकृष्णाद् व्याकरणमधीतम् आसीत् । भट्टोजिना शब्दकौस्तुभे स्वगुरोः शेषकृष्णविरचितस्य प्रक्रियाप्रकाशस्य खण्डनं कृतम् अतः पण्डितराजेन प्रौढमनोरमाखण्डने भट्टोजिदीक्षितः गुरुद्रोहीति शब्देन स्मृतः ।[61]

**समयः -** डा. वेल्वाल्करमतेऽस्य समयः 1656-1707 वि.सं. वर्तते अन्ये 1636 वि.स. मन्वते ।[62] तथापि नेदमित्त्थं वक्तुं शक्यते । एतत् कर्णपरम्परया श्रूयते, यदसौ मरणोपरान्तः ब्रह्मराक्षसरूपेण काश्यां निवसतीति । अस्य  शब्दकौस्तुभनामकग्रन्थस्य खण्डनं पण्डितराजजगन्नाथेन कृतम् ।

**युधिष्ठिरमीमांसकेन कृतः कालनिर्णयस्य प्रयासः -** 'लन्दन के इण्डिया ऑफिस के पुस्तकालय' इत्यस्मिन् विट्ठलविरचितायाः 'प्रक्रियाप्रसादनाम्नीटीकायाः एको लेखस्संगृहीतोऽस्ति। तस्यान्ते लेखनकालः 1536 लिखितमस्ति। अयं प्रक्रियाप्रसादस्य प्रतिलिप्याः कालोऽस्ति । ग्रन्थरचना विट्ठलेन इतः पूर्वं सम्भवतः कृता स्यात्।[63] विट्ठलेन व्याकरणस्य अध्ययनं शेषकृष्णसूनुवीरेश्वरात् इत्यपरनाम्नः रामेश्वरात् कृतम् । विट्ठलस्याध्ययनकाले शेषकृष्णस्य देहान्तोऽभवत्, अस्मिन्नास्ति किमपि पुष्टं प्रमाणम् । सम्भवेत् यत् विट्ठलेन शेषकृष्णस्य जीविते सत्यपि कैश्चित् कारणैः वीरेश्वरादध्ययनं कृतम्भवेत् । युधिष्ठिरमीमांसकस्य विचारोऽस्ति, यत् शेषकृष्णः वृद्धावस्थायां काशीवासाय काशीं गतस्यात् तत्रैव च भट्टोजिना तस्मादधीतम् ।  युधिष्ठिरमीमांसकः इतोपि विचारं करोति - अनेनैव साकं एतदपि सम्भवेद्यत् शेषकृष्णो दीर्घजीवी आसीत् तद्वृद्धत्त्वे च भट्टोजिना तच्छिष्यत्त्वं गृहीतम् स्यात् । यदि इयं वार्ता प्रमाणान्तरैः पुष्टा स्यात् तदा

---

60 द्र. श.कौ.मङ्ग. – नत्वा लक्ष्मीधरं तातं सुमनोवृन्दवन्दितम् ।

61 सं.व्या.शा.का इति.179 पृ.

62 तत्रैव177 पृ.

63 तत्रैव

भट्टोजिदीक्षितस्य कालः वि.सं. 1560 तः 1650 मध्ये भवितुं शक्यते ।[64] एवं श्रीयुधिष्ठिरमीमांसकेन कालनिर्णयस्य प्रयासः कृतः।

**विरचितग्रन्थानां परिचयः**[65] - भट्टोजिदीक्षितो बहून् ग्रन्थान् रचितवान् । तेषां नामानि च निम्नलिखितानि सन्ति -

| | | |
|---|---|---|
| 1.शब्दकौस्तुभः | 2. तत्त्वकौस्तुभः | 3. तन्त्रसिद्धान्तदीपिका |
| 4. वैयाकरणसिद्धान्तकारिका | 5. सिद्धान्तकौमुदी | 6. प्रौढमनोरमा |
| 7. वेदभाष्यसारः | 8. तैत्तिरीयसन्ध्याभाष्यम् | 9. तिथिनिर्णयः। |

बहुत्र भट्टोजितकृताः धर्मग्रन्थाः अपि निर्दिष्टास्सन्ति - त्रिस्थलीसेतु-प्रवरनिर्णय-चतुर्विंशतिमतव्याख्या-प्रभृतयो दशाधिकाः ग्रन्थास्सन्ति।

भट्टोजिदीक्षितेन अष्टाध्याय्याः शब्दकौस्तुभनाम्नी महती वृत्तिर्लिखिता अस्ति । इदानीं नेयं समग्रोपलब्धा, प्रारम्भ एव सार्धद्वयः चतुर्थोऽध्यायश्चोपलभ्यते । "शब्दकौस्तुभस्य प्रथमाध्यायस्य प्रथमे पादे पतञ्जलिकैयटहरदत्तग्रन्थानां स्वशब्देषु संग्रहः कृतः ।

**कृतिपरिचयः-** वेदान्तसम्बद्धः तत्त्वकौस्तुभः, पूर्वमीमांसासम्बन्धिनी 'तन्त्रसिद्धान्तदीपिका', सिद्धान्तकौमुदी च व्याकरणस्य प्रक्रियात्मको ग्रन्थः अस्ति  प्रौढमनोरमा च तद्व्याख्या अस्ति  । तथैव मूलमात्रवैयाकरणसिद्धान्तकौमुद्याः भूमिकायां गोपालदत्तपाण्डेयेन प्रोक्तम् – अनेनैव (भट्टोजिदीक्षितेनैव) विदुषा सिद्धान्तकौमुद्याः प्रौढमनोरमा-नाम्नी टीकापि स्वयमेव लिखिता ।[66] शब्दकौस्तुभस्य मूलाधारग्रन्थः  अष्टाध्यायी एव अस्ति । अस्य खण्डनं पण्डितजगन्नाथेन कृतम् । ऋग्वेदस्य प्रथमाध्यायमधिकृत्य 'वेदभाष्यसारः' इति वर्तते । 'तिथिनिर्णयस्य' अन्तिमे भागे होलिकादाहावसरेऽश्लीलपदानां प्रयोगास्समर्थिताः दृश्यन्ते ।

---

64 तत्रैव

65 सं.व्या.शा.का.इति.भट्टोजिदीक्षितपरिचये

66 वै.सि.कौ.मू.मा.भूमि.

**शब्दकौस्तुभस्य टीकाकाराः**[67] **-** 'आफ्रेक्ट' इत्यस्य बृहत् सूचीपत्रे शब्दकौस्तुभस्य प्रथमपादस्य षट्टीकाकाराणामुल्लेखः प्राप्यते । तेषां नामानि चेमनि सन्ति -

1. नागेशः - विषमपादी।
2. वैद्यनाथपायगुण्डे - प्रभा।
3. विद्यानाथ शुक्लः - उद्योतः।
4. राघवेन्द्राचार्यः - प्रमा।
5. कृष्णमित्रः - भावप्रदीपः।
6. भास्करदीक्षितः - शब्दकौस्तुभदूषणम्।

वेदभाष्यसारस्य भूमिकायां दीक्षितकृतानां 34 चतुस्त्रिंशत् ग्रन्थानां उल्लेखोऽस्ति । तेष्वेको 'धातुपाठ-निर्णयः' इति ग्रन्थोऽप्यस्ति । श्रीभट्टोजिकृतसिद्धान्तकौमुद्याः अपि बह्व्यष्टीकास्सन्ति । तासु बालमनोरमा तत्त्वबोधिनी च इति द्वे अतिप्रसिद्धे टीके स्तः।

अनेन बुधेन काश्यां वासः कृतः इत्यपि प्रसिद्धः। मरणानन्तरं च ब्रह्मराक्षसोऽभवदिति जनश्रुतिः अस्ति । वस्तुतः श्रीभट्टोजिदीक्षितः वैयाकरणानां समवाये चन्द्र इव शोभते । विद्वद्भिश्शाब्दिकैश्च भट्टोजिदीक्षितस्य व्याकरणशास्त्रे योगदानं न कदापि विस्मर्तुं शक्यते ।

**लेखनशैली-** सिद्धान्तकौमुद्याः लोकप्रियत्त्वेन एव अनुमातुं शक्यते यन्महानुभावस्याऽस्य कीदृशी शैली भवेत्। कौमुद्यां सूत्रव्याख्याने संक्षिप्तवचोभिस्सारमयैर्नानाविधोदाहरणैश्च सर्वथा सुगमसरलबोद्धव्यकृतव्याकरणशास्त्रोऽयं स्वीयं ग्रन्थं सरसीचकार । सर्वेऽप्यस्य ग्रन्थलेखनशैलीं प्रशंस्यमानाः न कुत्रापि निन्दामुखाः नान्यसाधनैर्वा पठितुं तत्पराः भवन्तीत्येव श्रीमतः विशिष्टगुणः अस्ति । अतो वक्तुं शक्यते यत् श्रीभट्टोजिदीक्षितः प्रतिभायुतो नैकशास्त्रविशारदः वैयाकरणः आसीत् ।

---

[67] व्या.शा.का.इति.भट्टोजिदीक्षितपरिचये ।

## 1.3. नव्यसिद्धान्तकौमुद्याः सामान्यपरिचयः-

व्याकरणशास्त्रे नव्यं तथ्यम् आविष्कर्तुं काले काले प्रतिभावद्भिर्विपश्चितपश्चिमैर्नव्यशोधयुताः बोधप्रदाश्च ग्रन्थाः विरचिताः। अष्टाध्यायाः वृत्तिग्रन्थेषु अपि प्रक्रियाकौमुदीवैयाकरणसिद्धान्तकौमुदीप्रभृतीनां ग्रन्थानां, नानाप्रक्रियाग्रन्थानां रचनाऽभूत् तैश्च नव्यतथ्यग्राहिणो भूत्त्वाऽध्येतारः व्याकरणमोदमग्ना अभूवन्। नागेशादीनां ग्रन्थैरपि नानाव्याख्याशोधबोधकैस्स्वीया विशिष्टता प्रथिता व्याकृज्जगति। सिद्धान्तकौमुदीप्रभृतिग्रन्थानां शृङ्खलायां अद्यतने युगे एकविंशतितमे शतके शास्त्रपठनपाठनक्षीणतासमागतकालेऽल्पमतिभ्यो बालेभ्यो दुरवबोधेषु च जातेषु सिद्धान्तकौमुद्यादिग्रन्थेषु, श्रीमतिपुष्पादीक्षिता कामपि नव्यतथ्यख्यापनकरं सद्योबोधप्रदं युगानुरुपं नव्यशैल्या ‘‘नव्यासिद्धान्तकौमुदी’’ नामग्रन्थं रचितवती । पाणिनीयेन प्रक्रियाविज्ञानेन समन्वितेयं नव्यसिद्धान्तकौमुदी प्रायः त्रयोदशसु भागेषु कल्पिता-

1.संज्ञापरिभाषम्

2. सन्धिः

3.औपदेशिकधातुपाठः

4. आतिदेशिकधातुपाठः

5. सार्वधातुकतिङ्कृत्

6. इडागमनिर्णयः

7. आर्धधातुकतिङ्

8. आर्धधातुककृत्

9.तद्धिताः

10. सुबन्तं स्त्रीप्रत्ययाश्च

11. कारकं द्विरुक्तिश्च

12. समासाः

13. स्वरप्रक्रियाविज्ञानम् ।

अत्र तत्तद्भागेषु तत्तत्प्रकरणानां व्याख्यानं श्रीपुष्पादीक्षितया बहु समीचीनतया कृतम् । अत्र सर्वेषु एव ग्रन्थेषु तस्याः विषयोपस्थापनस्य विशिष्टशैली अध्येतृभिर्लक्ष्यते ।

इत्त्थं श्रीमतिपुष्पादीक्षिता सर्वं पाणिनीयं प्रकाशं स्वीयेऽस्मिन् ग्रन्थे प्रथितवती । यद्यप्यद्यप्रभृतिरपि ग्रन्थोऽयं पूर्णरूपेण न प्राकाश्यमगात्, पञ्चैव भागाः प्रकाशिताः सन्ति, किन्तु सद्यः पूर्णतामियादिति श्रीपुष्पादीक्षितायाः प्रयत्नो वर्तते ।

### 1.3.1 नव्यकौमुद्यास्त्रयोदशे भागे स्वरप्रक्रिया-

व्याकरणशास्त्रे स्वराणां महत्त्वं तु सर्वैर्ज्ञायत एव । यथोक्तं पाणिनीयशिक्षायाम्-

**हस्तेन वेदं योऽधीते स्वरवर्णार्थसंयुतम्।**

**ऋग्यजुस्सामभिः पूतो ब्रह्मलोके महीयते।।**[68]

अतश्श्रीपाणिनिना स्वरसिद्धिहेतुः अष्टाध्याय्यां सूत्राणि विरचितानि, तैः धातुप्रातिपदिकसमासादीनां स्वराः सिद्ध्यन्ति। इमानि प्रायेण 263 सूत्राणि सन्ति। नव्यकौमुद्यास्त्रयोदशे भागे तान्येव सूत्राणि धातुप्रातिपदिकसमासस्वरादिप्रकरणनामपूर्वकं व्याख्यातानि। नव्यकौमुदीत्रयोदशभागभूमिकायां श्रीमतिपुष्पा भणति -

[68] पा.शि.55

“सिद्धान्तकौमुदीकारेण महता प्रमादेन स्वरसूत्राणि प्रसह्य कौमुद्याः पृष्ठभागे निक्षिप्तानि। येनेमानि सूत्राणि कौमुद्याः प्रक्रियाविज्ञानतोऽथ चाष्टाध्याय्या क्रमतोऽपि विच्छिन्नान्यकिञ्चित्कराणीव न किञ्चिदपि कर्तुं प्रभवन्ति ।[69]

यादृङ् मनोरञ्जकं सारल्यभृतं नानाग्रन्थरससमन्वितं भाष्यदृङ्निबद्धं च स्वराणां स्वरूपं, तन्नव्यकौमुद्यां लब्धुं शक्यते। आदौ चास्यां स्वरप्रक्रियाया उपक्रमो दर्शितः । अर्थात् यानि सूत्राणि सामान्येन स्वरनिदर्शकानि, तानि स्वरमार्गमालोकयन्ति यथा – उच्चैरुदात्तः[70], नीचैरनुदात्तः[71], समाहारः स्वरितः[72] - एतानि उदात्तादिसंज्ञाकराणि, तत्सम्बद्धव्याख्याऽनन्तरं स्वरप्रक्रियोपक्रमणे तत्र- एकादेश उदात्तेनोदात्तः[73], स्वरितो वाऽनुदात्ते पदादौ[74], उदात्तादनुदात्तस्य स्वरितः[75], नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम्[76], चौ[77], इत्यादीनि सूत्राणि उपक्रमितानि यैः सम्पूर्णस्य स्वराध्वानो दर्शनम्भवति। वैयाकरणासिध्दान्तकौमुद्यां चैतद्दिग्दर्शनं आरम्भ एव **साधारणस्वरः** इत्याख्येऽध्याये दृक्पथभाग् भवति ।

ततश्च धातूनां स्वरः क्व भवेदिति चिन्तयद्भिरस्माभिस्तत्र धातुस्वरः, नामकोऽध्यायोऽभिलक्ष्यते।

अत्र क्रमशस्सर्वेषां अध्यायानां सामान्येन परिचयो दीयते -

**1.धातुस्वरः** – इत्यस्मिन्नध्याये नव्यकौमुद्यां धातोः इत्यस्यैव एकमात्रसूत्रस्य व्याख्या कृता । एतत्सूत्रं सामान्यनियमं करोति यद् धातूनां अन्त्योऽच उदात्तस्स्यात् ।

यथा – जा͟गृ, च͟कासृ इत्यादयः ।

अत्रैव च सन्क्यच्काम्यचादीनां स्वरा अपि सूक्ष्ममार्गेण संस्थितिम्भजन्ते। नव्यकौमुद्यामत्र अल्पचर्चा एव अत्र कृता वर्तते । एतदत्र वैशिष्ट्यमस्ति यत्

---

[69] न.सि.कौ. 13 भागे भूमिकायाम्

[70] पा.सू.1-2-29

[71] पा.सू.1-2-30

[72] पा.सू.1-2-31

[73] पा.सू.8-2-5

[74] पा.सू.8-2-6

[75] पा.सू.8-4-66

[76] पा.सू.8-4-67

[77] पा.सू.6-1-222

सिद्धान्तकौमुद्यां येषां सूत्राणां सन्निवेशः धातुस्वरप्रकरणे अस्ति तानि नव्यकौमुद्यां धातुस्वरप्रकरणे मुख्यतः नोक्तानि , अपितु प्रकृतिस्वरनामके अध्याये तानि अत्र प्रोक्तानि ।

**2.प्रातिपदिकस्वरः –** अत्र नव्यकौमुद्यां प्रातिपदिकानां स्वरा उक्ताः।

अस्मिन् प्रकरणे पुष्पया प्रोक्तं - पाणिनिना धातोः इत्यनेन धातुस्वरा उक्ता, आद्युदात्तश्च इति सूत्रेण प्रत्ययस्वराः, एवमेव कित्-चित्-ञित्-नित्-तित्-पित्-करणेन क्वचित् प्रत्ययस्वराः क्वचित् प्रातिपादिकस्वराश्चोक्ताः,**अनुदात्तं पदमेकवर्जम्**[78] इति सूत्रेण पदमध्ये एकवर्णस्य मौख्यं स्वीकृतम् । किन्तु केनापि सूत्रविशेषेण प्रातिपदिकस्वरः नोक्तः । प्रातिपदिकानां स्वरास्तु, प्रत्ययबलेनैव सिध्यन्ति, कुत्रचित्प्रातिपादिकस्य मध्योदात्तः, क्वचिदाद्युदात्तः, क्वचिदन्तोदात्तश्चाप्यनेनैव हेतुना भवन्ति, अतो नव्यकौमुद्यां अथानुबन्धानुसारेण प्रातिपदिकस्वरः, इत्येतत्प्रकरणे प्रातिपदिकस्वरसम्बद्धसूत्राणि व्याख्यातानि।

**3.फिट्सूत्राणि -** फिट्सूत्राणां महत्ता कौमुदीकारेणाऽप्यनुभूता, नव्यकौमुदीकर्त्र्याऽपि । नव्यकौमुद्यां कौमुद्यापेक्षया कयाचिद् भिन्नरीत्या एषां समावेशः दृश्यते । फिट्सूत्राणि चतुर्षु पादेषु विभक्तानि सन्ति। तत्र प्रथमपादे अन्तोदात्तविधानं क्रियते, द्वितीये पादे आद्युदात्ताधिकारः क्रियते, तृतीये पादे द्वितायोदात्तविधानकराणि फिट्सूत्राणि, चतुर्थे पादे पर्यायेणोदात्तस्य क्रमश्चलति। कौमुद्यामनेनैव क्रमेणैषां सन्निवेशो व्याख्यानञ्च अस्ति, किन्तु नव्यकौमुद्यां शोधपरकरीत्याऽत्र कार्यं व्यधायि । अत्र चैतानि बाध्यबाधकपुरस्सराणि व्याख्यातानि, तेन सर्वमपि फिट्स्वरसम्बद्धचर्चनं सुकरीभवति, सारल्यमार्गेण चावबोधजनकं भवति । इतोऽनन्तरं अनुबन्धानुसारेण प्रातिपदिकस्वराः प्रोक्ताः ।

**4.प्रत्ययस्वराः –** प्रत्ययानां स्वरसम्बन्धभ्रमध्वान्तध्वंसकानि सूत्राणि अष्टाध्यायीस्थान्यत्र शोभाङ्गतानि । यथा – **आद्युदात्तश्च**[79] एतेन प्रत्यय आद्युदात्त एव स्यात्, इति नियमः क्रियते । **अनुदात्तौ सुप्पितौ**[80], **तिसृभ्यो जसः**[81], इत्यादीनि

---

[78] पा.सू.6-1-158

[79] पा.सू.3-1-3

[80] पा.सू.3-1-4

[81] पा.सू.6-1-166

सूत्राण्यपवादत्वेन प्रोक्तानि सन्ति। अत्र प्रत्ययस्वरसूत्रसम्बद्धं नव्यकौमुदीव्याख्यानं प्रक्रियोपेतं, भाष्यमतविख्यापकं , तथ्यसरलकारकं च विभ्राजते। नानाटीकानां मतान्यप्यत्र दृक्पथमायान्ति।

**5.प्रत्यये परतः प्रकृतिस्वरः -** एतन्नामकं प्रकरणं नव्यकौमुद्यामेव वर्तते न हि सिद्धान्तकौमुद्याम्। सिद्धान्तकौमुद्यां येषां सूत्राणां अभिनिवेशः धातुस्वरप्रकरणे कृतः, तान्येव नव्यकौमुद्यां प्रकृतिस्वराख्येऽध्याये विभ्राजितानि। धातुर्हि शब्दस्य प्रकृतिर्भवति । अतः उभयोर्न कोऽपि भेदः । अत्र प्रकृतिस्वरविधायकानां सूत्राणाञ्चर्चनैस्तत्तत्सूत्रविन्यासैश्च सर्वो विषयः सम्यक्तयोपस्थापितः। व्याख्यानशैल्यां सारल्यं, नानाटीकावगाहितरूपत्वं च व्याख्याने दर्शनीयमस्त्येव ।

**आदिस्सिचोऽन्यतरस्याम्**[82] – सिजन्तस्यादिरुदात्तः विकल्पेन क्रियतेऽनेन सूत्रेण, ततः **स्वपादिर्हिंसामच्यनिटि**[83] **अभ्यस्तानामादिः**[84] इत्यादीनि सूत्राण्यपि प्रकृतिस्वरमुत धातुस्वरं ख्यापयन्ति।

**6.आदेशस्वरः –** यानि सूत्राणि आदेशकराणि, तेषामादेशानां स्वरः क्व भवेदेतन्निर्णयोऽध्यायेऽस्मिन् नव्यकौमुद्यामुपस्थापितः अस्ति।

यथा- **हनश्च वधः**[85] – हनः वधादेशो भवति, स चान्तोदात्तः।

एवमेव **अस्थिदधिसक्थ्यक्ष्णामनङ् उदात्तः**[86] – एतेन सूत्रेण अस्थ्यादीनाममनङ् आदेशः क्रियते स चोदात्तः भवति । इत्थमेव चान्येषामपि आदेशस्वराणां, निर्देशोऽत्रोपलभ्यते न हि सिद्धान्तकौमुद्यां स्वरप्रक्रियास्थले आदेशस्वरनिदर्शनम्प्राप्यते। अतोऽस्याः नव्यकौमुद्याः वैशिष्ट्यं स्पष्टमेव।

**7. आगमस्वरः -** अत्र आगमानां स्वरा उक्ताः सन्ति।

यथा- **आडजादीनाम्**[87] – एतेन सूत्रेण आडागमः क्रियते, स चोदात्तो भवति। उदाहरणम् – ऐक्षत । तथैव **लुङ्लङ्लृङ्क्ष्वडुदात्तः**[88] – एतत्सूत्रं अडागमविधायकं, स

---

[82] पा.सू.6-1-184

[83] पा.सू.6-1-185

[84] पा.सू.6-1-186

[85] पा.सू.3-3-76

[86] पा.सू.7-1-75

[87] पा.सू.6-4-72

च अडागमः भवति । यथा – अकार्षीत् । इत्थमेवास्मिन्नध्याये पञ्चसूत्राणां सन्निवेशोऽत्रास्ति ।

आगमाः अनुदात्ताः भवन्ति, **यासुट् परस्मैपदेषूदात्तो ङिच्च**[89] **किदाशिषि**[90] **लुङ्लङ्लृङ्क्ष्वडुदात्तः**[91] **आडजादीनाम्**[92] **चतुरनडुहोरामुदात्तः**[93] इत्येतेषाम् ।

एतदपि प्रकरणं नव्यकौमुद्यामेव अस्ति, सिद्धान्तकौमुद्यां स्वरप्रक्रियाऽवसरे नास्ति, अपितु प्रकरणान्तरेषु तत्तत्सूत्राणि विन्यस्तानि सन्ति ।

8. **सुबन्तस्वरः –** अत्र **झल्युपोत्तमम्**[94] **विभाषा भाषायाम्**[95] – इति द्वे सूत्रे एव सन्ति। अत्र नव्यकौमुद्यामुक्तम् – सुबन्तस्वराः प्रत्ययस्वरप्रकरणे द्रष्टव्याः ।

**9. समासस्वरः –** नव्यकौमुद्यां समासस्वरव्याख्यानस्य, क्रमनिबन्धनस्य च स्वकीयं विशिष्टमेव महत्वमस्ति । कौमुद्यां तु अष्टाध्यायीक्रमेणैव सर्वेषां समासस्वरसूत्राणामुपबृंहणं कृतमस्ति, किन्तु नव्यकौमुद्यां नैतत्प्रकारेण अत्र प्रत्येकं समासस्य पृथक् पृथक् स्वरनिर्देशः ।

यथा आदौ **बहुव्रीहिसमासस्य –** अत्र बहुव्रीहिसमासस्य पूर्वपदप्रकृतिस्वरः,

पूर्वपदान्तोदात्तस्वरः, पूर्वपदाद्युदात्तस्वरः, उत्तरपदान्तोदात्तस्वरः, उत्तरपदाद्युदात्तस्वरश्च प्रोक्तः, तदनन्तरं तत्पुरुषसमाससम्बद्धा स्वरचर्चाऽस्ति । ततोऽव्ययीभावस्य, द्वन्द्वसमासस्य स्वरचर्चा चानन्तरं कृतास्ति । एतेन एकैकस्य समासस्य पृथग्रूपेण स्वराः विज्ञातुं शक्यन्ते । नैवं कौमुद्यां निर्देशः ।

10. **आमन्त्रितस्वरः –** अत्र तेषां सूत्राणां सन्निवेशोऽस्ति, यानि आमन्त्रितस्य स्वरविधानं कुर्वन्ति । **सामन्त्रितम्**[96] इति सूत्रेण प्रथमातदन्तस्य आमन्त्रितसंज्ञा क्रियते। तस्य आमन्त्रितस्य च इति सूत्रेण आद्युदात्तो विधीयते । **सुबामन्त्रिते पराङ्गवत्स्वरे**[97]

---

88 पा.सू.6-4-71

89 पा.सू.3-4-103

90 पा.सू.3-4-104

91 पा.सू.6-4-71

92 पा.सू.6-4-72

93 पा.सू.7-1-98

94 पा.सू.6-1-177

95 पा.सू.6-1-181

96 पा.सू.2-3-48

97 पा.सू.2-1-2

**आमन्त्रितस्य च**[98]**, आम एकान्तरमामन्त्रितमनन्तिके**[99] इत्यादीनां सूत्राणां व्याख्यानं मूढमतिभ्योऽपि आमन्त्रितस्वरज्ञानं दातुं शक्तम् । कौमुद्याम् एतत्प्रकरणं नास्ति, अपितु कानिचिदेव सूत्राणि स्वरप्रक्रियायां तत्र विन्यस्तानि ।

11. **आम्रेडितस्वरः –** आम्रेडितानां स्वराः क्व भवेयुः? इत्यत्र सम्यङ् निगुम्फितम् । **तस्य परमाम्रेडितम्**[100] इति सूत्रेण द्विरुक्तस्य यत् परं शब्दरूपं तस्य आम्रेडितसंज्ञा क्रियते ।

एवं अनुदात्तं च इत्यनेन आम्रेडितोऽनुदात्तो विधीयते।

यथा – **भुङ्क्ते भुङ्क्ते** – अत्र भुङ्क्ते इत्यस्य आम्रेडितत्वे, अनुदात्तता । एवमत्र नव्यकौमुद्याम् आम्रेडितस्वरविमर्शः प्रस्तुतः अस्ति ।

**12.वाक्यस्वरः–** वाक्यस्वरविभागो नव्यकौमुद्यां त्रिधा कृतः सुबन्ततिङन्तप्लुतस्वरभेदेन । यतो हि सुप्तिङ्चयो वाक्यम्भवति, प्लुतोऽपि च वाक्ये एव स्वीक्रियते ।

13. **एकश्रुतिस्वरः -** अष्टाध्याय्यां प्रोक्तानां एकश्रुतिस्वरसम्बद्धसूत्राणां विवेचनमत्र पुष्पादीक्षितया कृतमस्ति । तत्र च महाभाष्यादिग्रन्थानां साहाय्यं गृहीत्वा तत्रत्यं तथ्यं प्रकटीकृतमस्ति ।

## 1.5. नव्यसिद्धान्तकौमुदीकर्त्र्याः सामान्यपरिचयः -

अस्मिन् संसारे बहवः मनुष्याः जन्मानि लभन्ते तथा म्रियन्ते परन्तु तेषामेव जीवनं सफलीभवति, ये शास्त्राय जीवन्त्युपकुर्वन्ति चान्यान् अपि । अधुनातने काले अपि एतादृशीमेव काश्चित्परम्परामुद्वहन्ती श्रीपुष्पादीक्षितमहाशया बिलासपुरस्था वृद्धत्त्वं धन्यीकुर्वन्ती नानाऽध्येतृभ्यो व्याकरणज्ञानं प्रददाति । तस्या एव परिचयो मयाऽत्र सामान्यरूपेण प्रस्तूयते।

[98] पा.सू.8-1-19

[99] पा.सू.8-1-55

[100] पा.सू.8-1-2

**सामान्यपरिचयः –** श्रीपुष्पादीक्षितायाः जन्म 01-07-1942 दिनाङ्के मध्यप्रदेशस्य जबलपुरजनपदे अभवत् । अस्याः पितुः नाम पण्डितसुन्दरलालशुक्लः मातुः नाम च जानकीदेवी अस्ति । अस्य पिता प्राणाचार्य इति कथ्यते स्म । यतो हि सः प्रख्यातः आयुर्वेदचिकित्सकः आसीत् ।

**शैक्षणिकी योग्यता –** पुष्पादीक्षिता बाल्यकालादेव बुद्धिमती आसीत् । सा संस्कृतविषयेण एम.ए. इति उपाधिलाभे त्रीणि स्वर्णपदकानि[101] प्राप्तवती । तदनन्तरं सा जबलपुरस्य रानीदुर्गावतीविश्वविद्यालये पी.एच.डी. इति उपाधिं प्राप्तवती । सा शासकीयकन्या-स्नातकोत्तर-महाविद्यालये बिलासपुरे (छत्तीसगढराज्ये) पूर्वं प्रोफसर इति पदे आसीत् ततः तत्र एव संस्कृतविभागाध्यक्षा च जाता । सेवानिवृत्ते सति सा बिलासपुरे एव पाणिनीयशोधसंस्थानम् इत्यस्य स्थापनां कृतवती । तस्य स्थानम् अस्ति –कोसल-संस्कृत-समिति/पाणिनीयशोधसंस्थान, आर्य समाज के पास, गोंडपारा,बिलासपुर (छत्तीसगढ) इति । श्रीपुष्पादीक्षितायाः अध्यापनस्य अनुभवः 39 वर्षं यावत् अस्ति । तथा च शोधकार्यस्य अनुभवः 27 वर्षाणाम् अस्ति । श्रीपुष्पादीक्षिता महामहोपाध्याया इति पदेन विभ्राजिता अस्ति । छात्राः प्रेम्णा आदरेण च तां माताजी इति वदन्ति ।

**गुरुपरम्परा[102] –**

अस्याः गुरुपरम्परायां प्रथितयशस्कानां विदुषां नामानि सन्ति –

1. वैयाकरणशिरोमणिः आचार्यो विश्वनाथः त्रिपाठी
2. आचार्यः पण्डितसुन्दरलालशुक्लः
3. आचार्यः अभिनवपाणिनिः डॉ. पं.रामप्रकाशत्रिपाठी
4. आचार्यः डॉ. बच्चूलालः अवस्थी ज्ञान
5. आचार्यः डॉ. पं. रामयत्नशुक्लः

---

101 Wwwpushpadikshit.com

102 Wwwpushpadikshit.com

**पुष्पादीक्षितया व्याकरणशास्त्रे नव्या उद्भावना कल्पिता –**

अत्र कश्चिदपि सन्देहो नास्ति यत् श्रीपुष्पादीक्षितया व्याकरणक्षेत्रे महत् कार्यं कृतम् । तया व्याकरणपाठनस्य नव्यानां विधीनाम् आश्रयो गृहीतः । सा तादृश्याः शैल्याः अन्वेषणं कृतवती यया छात्राः झटिति व्याकरणस्य ज्ञाने समर्थाः भवेयुः । एतदेव कारमेन सा व्याकरणस्य बहूनां ग्रन्थानां प्रमयनं शोधरपरकरीत्या कृतवती । धातूनां कृदन्तस्य सुबन्तस्य तद्धितस्य च पाठनस्य या शैली  तस्या अस्ति  सा तत्पठितेभ्यः छात्रेभ्योऽपि रोचिता । तस्याः पुस्तकेषु तेषां शोधपरकतथ्यानि दृष्टिगोचराणि भवन्ति ।

**पुष्पादीक्षितायाः उपलब्धयः –**

राष्ट्रियस्तरस्य संस्कृतगोष्ठीषु प्रतिभागिता शोधपत्र-प्रस्तुतीकरणं च – श्रीपुष्पया  राष्ट्रियस्तरस्य विभिन्नसङ्गोष्ठीषु शताधिकानां शोधपत्राणां वाचनं कृतवती । तेषु च नैकानि शोधपत्राणि प्रकाशितानि सन्ति । अखिलभारतीयप्राच्यविद्या-सम्मेलनम् यच्च प्रत्येकं वर्षद्वये राष्ट्रस्य विभिन्नेषु स्थानेषु भवति, तत्र पुष्पादीक्षिता सक्रियसदस्यरूपेण भागं गृह्णाति । पुष्पादीक्षितया प्रत्येकं सम्मेलने भाषाविज्ञानं व्याकरणशास्त्रं च इत्येतद् द्वयम् आधृत्य नियमितरूपेण विगतानि शोधपत्राणि पठितानि । दिल्ली सागरः प्रयागः वाराणसी लखनऊ – इत्यादिषु देशस्य विभिन्नेषु विश्वविद्यालयेषु आयोजितासु शोधगोष्ठीषु श्रीपुष्पादीक्षिता स्क्रियरूपेण लउपस्थिता भवति ।

**राष्ट्रियस्तरस्य कविसमवायेषु प्रतिभागिता –**

प्रायः सर्वेषु अखिलभारतीयकविसम्मेलनेषु पुष्पादीक्षितायै निमन्त्रणम् अवश्यं दीयते । एतदत्र विशिष्टरूपेण उल्लेखनीयम् अस्ति यत् त्रयोदशतमं यत् विश्वसंस्कृतसम्मेलनम्  यच्च स्कॉलेण्डस्य एडिनबराक-विश्वविद्यालये आयोजितम् आसीत् तस्मिन् काव्यपाठाय भारतात् 15 राष्ट्रियसंस्कृतकवीनां चयनं कृतम् आसीत् । तेषु कविषु कश्चिद् विशिष्टं नाम पुष्पादीक्षितायाः अपि आसीत् ।

**शोधकार्यम् –** पुष्पादीक्षितायाः सान्निध्ये न केवलं नैके शोधच्छात्राः शोधोपाधिं प्राप्तवन्तः अपितु तस्याः पुस्तकानि आधृत्य अपि नैके छात्राः डॉक्टर इति पदवीं लब्धवन्तः ।

**संस्कृतस्य हिते पुष्पादीक्षितायाः सततं कार्यम्-**

कौसलसंस्कृतसमित्याः अध्यक्षा श्रीमती डॉ.पुष्पा दीक्षिता संस्कृतभाषायाः सर्वविधोन्नत्यै निरन्तरं परिश्रमपरा लग्नशीला दत्तचित्ता चास्ति । तद्द्वारा शासनस्य ध्यानं निरन्तरं संस्कृतस्य कल्याणाय विकासाय च आकृष्टं क्रियते । पुष्पादीक्षितायाः स्वस्य एव दशसहस्राधिकैः ग्रन्थैः शोभितं पुस्तकालयम् अस्ति । तत्र च संस्कृतवाङ्मयस्य अत्यधिकानि पुस्तकानि सन्ति तत्र चागत्य बहवः शोधच्छात्राः स्वशोधकार्याय सहायतां प्राप्नुवन्ति ।  श्रीपुष्पा बिलासपुरे निवासं कुर्वन्ती सती तत्रत्यान् जनान् निश्शुल्करूपेण संस्कृतभाषायाः ज्ञानं ददाति । जनतायां संस्कृतं प्रति रुचिं जागरूकतां च वर्धयितुं सा निश्शुल्करूपेण सामान्यजनान् अपि गीतपाठं स्तोत्रपाठं सरलसंस्कृतं इत्यादिकं पाठयति न केवलं एतन्मात्रमेव देशस्य दूरेभ्यः भागेभ्यः गुरुकुलानां छात्राः आगत्य तया संस्कृतव्याकरणस्य ज्ञानं नव्यशैल्या प्राप्नुवन्ति । तेन च ते सर्वे बहुप्रसन्नाः भवन्ति । यतो हि पुष्पादीक्षितयाः शैली यास्ति पाठनस्य तत्र श्रमं तु भवति किन्तु केषुचिदेव मासेषु बालकेषु नव्यम् एव रङ्गं व्याकरणस्य द्रष्टुं शक्यते । भवती संस्कृते दृढनिष्ठावती अस्ति इति सर्वप्रथितम् अस्ति ।

**छत्तीसगढे द्वयोः संस्कृतविद्यालययोः स्थापना[103] –**

डॉ.पुष्पा दीक्षिता 2002 तमे वर्षे जनानां सहयोगेन बिलासपुर-जनपदस्य अड़भार,पेण्ड्रा इति ग्रामे वासुदेववैदिकविद्यालयः इत्यस्य स्थापनां कृतवती । तत्र च छात्राणां भोजनस्य आवासस्य पाठनस्य च व्यवस्था पूर्णतः निश्शुल्का जनसहयोगेन क्रियते ।यद्यपि सा अपि संस्था पृथक् पञ्जीकृता अस्ति ।  अस्याः संस्थायाः संरक्षिका अध्यक्षा च पुष्पा दीक्षिता एव अस्ति । तस्याः एव सत्प्रयासैः संस्था इयं अद्यावधिः अपि अबाधरूपेण प्रवर्तते ।

पुष्पादीक्षितायाः एव प्रयासैः 2004 तमे वर्षे महामाया-ट्रस्ट-कानपुर इत्यनेन एकस्य वैदिक-संस्कृत-विद्यालयस्य स्थापना कृता अस्ति । संस्कृतस्य रक्षा यदि अस्ति तदा एव अस्माकं संस्कृतेः राष्ट्रस्य अस्माकं च सुरक्षा अस्ति इति पुष्पादीक्षितायाः  जीवनस्य चिन्तनम् अस्ति ।

पुष्पादीक्षितया प्राप्ताः पुरस्काराः सम्मानानि च –

वेदवेदाङ्गसम्मानम् – महर्षि-सान्दीपनी-राष्ट्रियवेदविद्याप्रतिष्ठान-उज्जयिनी इत्यनेन दिल्लीनगरे आयोजिते कार्यक्रमे प्रतिष्ठानस्य अध्यक्षेण मानवसंसाधनविकासमन्त्रालयस्य

---

[103] Wwwpushpadikshit.com

माननीयेन मन्त्रिणा डॉ.मुरलीमनोहरजोशी इत्यनेन 14 अगस्त दिनाङ्के  2003 तमे वर्षे व्याकरणविषयाय पुष्पादीक्षिता सम्मानिता ।

CERTIFICATE OF HONOUR

भारतस्य राष्ट्रपतिना डॉ.ए.पी.जे.अब्दुलकलामेन 15 अगस्त दिनाङ्के 2014 तमे वर्षे पुष्पा दीक्षिता  संस्कृते निपुणतायै शास्त्रे पाण्डित्याय च सम्मानप्रमाणपत्रम् (CERTIFICATE OF HONOUR)  प्राप्तवती , यस्य फलस्वरूपं पुष्पायै आजीवनं  50000 रूप्यकाणि प्रतिवर्षं सर्वकारेण दीयन्ते ।

**राजकुमारी-पटनायक-सम्मानम्**

छत्तीसगढस्य राज्यपालेन श्री पी.सी. सेठेन  14 सितम्बर 2004 तमे वर्षे भाषायः क्षेत्रे अभूतपूर्वयोगदानाय पुष्पादीक्षिता 2003 तमवर्षस्य राजकुमारी-पटनायकसम्मानेन अलङ्कृता ।

**छत्तीसगढ-राज्य-अलङ्करण-सम्मानम्-**

छत्तीसगढराज्यशासनेन 1 नवम्बर 2007 तमे वर्षे छत्तीसगढराज्य-अलङ्करणसम्मानेन लक्षद्वयरूप्यकैः सम्मानपत्रेण च सम्मानिता ।

**वाचस्पति-उपाधिः**

श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठम् दिल्ली इत्यनेन 26-12-2010 इति दिनाङ्के पुष्पायै वाचस्पतिः इति मानद-उपाधिः दत्ता ।

**महामहोपाध्यायस्य उपाधिः**

उत्तराखण्ड-संस्कृत-विश्वविद्यालय-हरिद्वारेण  24-03-2011 दिनाङ्के महामहोपाध्याय इति मानद-उपाधिः पुष्पायै दत्ता ।

**संस्कृतात्मा सम्मानम्**

संगमनेर-महाविद्यालयेन 21-02-2013 दिनाङ्के  पुरस्कारसहितं संस्कृतात्मा सम्मानम् इति प्रदत्तम् ।

**पुष्पादीक्षितायाः कृतयः[104] –**

**व्याकरणस्य कृतयः**

अष्टाध्यायीसहजबोधः प्रथमः खण्डः (तिङन्त-सार्वधातुकलकारः)

अष्टाध्यायीसहजबोधः द्वितीयः खण्डः (तिङन्त-आर्धधातुक-लकारः)

अष्टाध्यायीसहजबोधः तृतीयः खण्डः (कृदन्तः)

अष्टाध्यायीसहजबोधः चतुर्थः खण्डः (तद्धितः)

प्रकरणनिर्देशसमन्वितः महर्षिपाणिनिप्रणीतः अष्टाध्यायीसूत्रपाठः

सस्वरः पाणिनीयः धातुपाठः (सार्वधातुकप्रत्ययोपयोगी)

सस्वरः पाणिनीयधातुपाठः (आर्धधातुकोपयोगी)

प्रक्रियानुसारी पाणिनीयधातुपाठः।

आर्धधातुक प्रत्ययों की इडागम व्यवस्था

पाणिनीयः धातुपाठः सार्थः ।

तिङ्कृत्कोषः प्रथमः - सार्वधातुकखण्डः।

तिङ्कृत्कोषः द्वितीयः  -आर्धधातुकखण्डः ।

धात्वधिकारीयं सामान्यमङ्गकार्यम् ।

नव्यसिद्धान्तकौमुदी (त्रयोदश-भागेषु विभक्ता , तत्र स्वरप्रक्रियासहिताः 6 भागाः प्रकाशिताः)

तिङन्तकोषः त्रयः भागाः ।

---

104 Wwwpushpadikshit.com

कृदन्तकोषः –द्वौ भागौ ।

णिजन्तकोषः ।

सन्नन्तकोषः ।

यङन्तकोषः ।

यङ्लुङन्तकोषः ।

इडागमः ।

पाणिनीयधातुपाठः ।

सनाद्यन्तधातुपाठः ।

लकारसरणिः (चत्वारो भागाः )

शीघ्रबोधव्याकरणम् ।

**साहित्यकृतयः-**

अग्निशिखा (गीतिकाव्यम्)

शाम्भवी (गीतिकाव्यम्)

सौन्दर्यलहरी

अपराजितवधूकाव्यम् (अनुवादकार्यम्)

**बहुमाध्यम-कृतयः –**

तिङन्तसिद्धिः (10 लकार-रूपसिद्धिः)

अष्टाध्यायी की अध्ययन पद्धति

तिङन्तप्रक्रिया

**प्राकाश्याः ग्रन्थाः -**

अष्टाध्यायी-सहजबोधस्य पञ्चमः षष्ठः सप्तमः अष्टमः च खण्डः ।

परिभाषेन्दुशेखर की बहुतर परिभाषाओं की अन्यथासिद्धि ।

नव्यसिद्धान्तकौमुद्याः सप्तभागाः ।

सिद्धान्तकौमुदी की वृत्तियों का अष्टाध्यायीक्रम से व्यवस्थापन ।

**पाणिनिशालायाः परिचयः –**

पाणिनीय-शोधसंस्थानम् अस्याः अध्यक्षा पुष्पादीक्षिता अस्ति । तस्याः निवासे 2002 इति वर्षात् प्रतिवर्षं पाणिनिशालायाः आयोजनं क्रियते । तत्र सरलविधिना व्याकरणपठनाय सम्पूर्णस्य देशस्य विभिन्नस्थलेभ्यः छात्राः प्राध्यापकाश्च आयान्ति । तेषां निवासस्य भोजनस्य च व्यवस्था जनसहयोगेन कोसलसंस्कृतसमिति-द्वारा क्रियते । तत्र अध्यापनं श्रीपुष्पा दीक्षिता एव करोति । अत्र पाणिनिशालायां न केवलं भारतस्य एव जनाः पठितवन्तः अपितु अमेरिकातः श्रीनरेन्द्रन्-महोदयः, नेपालात् दावा ल्हासा-महोदयः, बाँग्लादेशात् लुब्ना मरियम-महोदया , शिकागो-देशतः वरुणखन्ना , चीनदेशात् चाऊ यन् –महोदयः , इत्यादयः जनाः अपि अत्र आगत्य पाणिनीयव्याकरणस्य विशिष्टम् अध्ययनं कृतवन्तः ।

तत्र च पाणिनिशालायां आगन्तृभ्यः छात्रेभ्यः प्रत्येकं वर्षे विषयानुसारं पठनाय व्यवस्थायै च विशिष्टनिर्देशाः अपि सन्ति, यथा अत्र 15-5-2014 तः 15-6-2014 पर्यन्तं प्रचलितायाः कार्यशालायां प्रवेशसम्बन्धिदिशानिर्देशानाम् उदाहरणं प्रस्तूयते –

- कार्यशालायाम् आवासस्य भोजनस्य शिक्षायाः च व्यवस्था निश्शुल्का अस्ति ।
- पाठ्यसामग्री संलग्ना अस्ति । तस्याः अध्ययनं कृत्वा दूरभाषेण तस्य परीक्षां निश्चितदिनाङ्के दत्त्वा प्रवेशं प्राप्नुवन्तु ।
- संस्कृतभारत्या प्रकाशिते पाणिनीयमूलधातुपाठे 1930 धातवः सन्ति । ते च दशगणेषु विभक्ताः सन्ति , तेषां पाठं कुर्यात् ।

- पाठ्यक्रमेण सह अष्टाध्याय्याः कश्चिद् भागः संलग्नः अस्ति , तस्य पाठं कुर्यात् ।
- प्रक्रियानुसारी पाणिनीयधातुपाठः , अष्टाध्यायीसूत्रपाठः, अष्टाध्यायीसहजबोधः च सह एव आनयेत् ।
- यदि पुस्तकानाम् अनुपलब्धता स्यात् तर्हि पूर्वसूचना प्रदेया , येन पुस्तकानां व्यवस्था करिष्यते ।
- स्व-शयनाय शयनवस्त्रं, तथा भोजनाय पात्राणि सह एव आनेतव्यानि ।

एतेन प्रकारेण अस्माभिः दृष्टं यत् पाणिनिशालायाः आयोजनेन बहूनां व्याकरणबुभुत्सूनां छात्राणां लाभः भवति । अत्र इयं परोपकारदृष्टिः श्रीपुष्पादीक्षितायाः एव अस्ति । एतत्प्रकारेण अस्माभिः ज्ञातं यत् श्रीपुष्पादीक्षितायाः जीवनं संस्कृताय समर्पितमस्ति । व्याकरणशास्त्राय च समर्पितमस्ति । तस्याः जीवनं ह्यस्माकं कृते प्रेरणादायकमस्ति ।

## 1.6.व्याकरणैतिह्यम् –

मानवसमाजे व्यवहारार्थं भाषा भवति। तासु सर्वासु भाषासु संस्कृतं सर्वेभ्यः प्राचीना भाषा कथ्यते। इयं देववाणीरूपेणापि जनैरुच्यते। संस्कृतभाषा पूर्णतः व्याकरणाश्रिता भवति। अतः व्याकरणशास्त्रस्य च संस्कृतस्य सम्पूर्णे वाङ्मये अधिकारः वर्तते। तद्विना न कोपि वेदशास्त्रादीनि अधिगन्तुं समर्थः भवितुमर्हतीति सर्वे जानन्ति। अस्य व्याकरणशास्त्रस्य आदिप्रवर्तकः भगवान् शिवः अस्ति। शिवाच्चेदं शास्त्रं ब्रह्मादिभ्यो दत्तं ततश्च लोके प्रसृतम्। यथा च ब्रह्मणः आरभ्य परम्पराविषये महाभाष्ये प्रोक्तम् – ब्रह्मा बृहस्पतये बृहस्पतिरिन्द्रायेन्द्रो भरद्वाजाय भरद्वाज ऋषिभ्य ऋषयो ब्राह्मणेभ्य इति।[105] अस्य व्याकरणस्य इन्द्रः चन्द्रः काशकृत्स्नः आपिशलिः शाकटायनः पाणिनिः अमरः जैनेन्द्रः इति अष्टौ प्रवक्तारः प्रोक्ताः सन्ति।

एवञ्च रामायणस्य उत्तरकाण्डेऽपि श्रीहनुमान् नव्याकरणानां ज्ञाता आसीत् इति तथ्यं प्राप्यते – सोऽयं नवव्याकरणार्थवेत्ता। अद्यतने काले सर्वाधिकं यशः लोकप्रियता च पाणिनीयव्याकरणस्य वर्तते। यतो हि तस्य अष्टाध्यायां सूत्राणां व्यवस्थापनस्य यो वैज्ञानिकक्रमः अस्ति सा चमत्कारपूर्णोऽस्ति। पाणिनिश्च शिवमुपास्य तस्माच्चतुर्दशसूत्राणि प्राप्य अष्टाध्यायीं विरचितवान्। पाणिनेः अनन्तरं यत् किमपि बुधैर्लिखितं प्रोक्तं विचारितञ्च, तत्सर्वं पाणिनिशास्त्रमधिकृत्यैव। अतः पाणिनीयव्याकरणस्य महत्ता स्वतः सिद्धा एव। इह वयं व्याकरणस्य इतिहासस्य चर्चां कुर्मः, अतः विशालं व्याकरणशास्त्रस्य इतिहासं वयं त्रिषु भागेषु विभक्तुं शक्नुमः -

1. पाणिनेः पूर्ववर्तिनः आचार्याः,
2. पाणिनिस्तात्कालिकाः च आचार्याः,
3. पाणिनेः परवर्तिनः आचार्याश्च।

अनेन मार्गेण सौकर्येण तर्तुं शक्यते व्याकरणैतिह्यसमुद्रः। स्थाने स्थाने व्याकरणग्रन्थानां तत्कर्तृकाणां तेषां स्थितिसम्बद्धकालानां तत्प्रसिद्ध्यादीनाञ्च वर्णनं समुपस्थाप्यते।

---

[105] म.भा. पस्पशा.

वैदिकव्याकरणे प्रातिशाख्यानां महत्त्वमस्ति। दश प्रातिशाख्यानि इमानि सन्ति[106] –

| | | |
|---|---|---|
| 1 | ऋक्प्रातिशाख्यम् | |
| 2 | वाजसनेयप्रातिशाख्यम् | |
| 3 | सामप्रातिशाख्यम् | |
| 4 | अथर्वप्रातिशाख्यम् | |
| 5 | तैत्तिरीयप्रातिशाख्यम् | |
| 6 | मैत्रायणीप्रातिशाख्यम् | |
| 7 | आश्वालायनप्रातिशाख्यम् | |
| 8 | बाष्कलप्रातिशाख्यम् | |
| 9 | शाङ्खायनप्रातिशाख्यम् | |
| 10 | चारायणप्रातिशाख्यम् | |

इतोSनन्तरं सप्तवैदिकव्याकरणानां नामानि अपि एतानि सन्ति[107] -

1. **ऋक्तन्त्रम्** - एतत् शाकटायनेन प्रणीतमस्ति, अथवा औदव्रति-कृतं वा।अत्र सन्देहः अस्ति।
2. **लघु-ऋक्तन्त्रम्** - अस्य कोSपि अज्ञातकर्ता अस्ति। नाम ज्ञातं नास्ति।
3. **प्रतिज्ञासूत्रम्** - एतत् कात्यायनेन विरचितम् अस्ति।
4. **अथर्वचतुरध्यायी** - इयं शौनकमुनिरचिता अस्ति कौत्सेन कृता वा इति सन्देहः अस्ति।
5. **भाषिकसूत्रम्** - एतत् कात्यायनेन विरचितमस्ति।
6. **अक्षरतन्त्रम्** - एतत् आपिशलिना कृतमस्ति।

---

106 व्या.शा.इति.ब्र.द.त्रिपा. पृ.13

107 तत्रैव

7. **सामतन्त्रम्** - अत्र सन्देहः अस्ति यत् एतत् औदव्रजिकृतं गार्ग्यकृतं वा । प्रातिशाख्येषु एकोनषष्टिः आचार्याणाम् अपि उल्लेखः कृतः अस्ति किन्तु विस्तरभयादत्र तन्न दीयते । ये आचार्याः पाणिनेः अष्टाध्याय्यां नोक्ताः, ते पाणिनेः पूर्ववर्तिनः आचार्याः इमे सन्ति –

1. महेश्वरः(11500 वि.पू.) – भगवान् शिव एव महेश्वरः अस्ति । महाभारतस्य शान्तिपर्वणि शिवसहस्रनामव्याख्याने शिवः षडङ्गानां प्रणेता मतः अस्ति । यथा – वेदात् षडङ्गान्युद्धृत्य ।[108] तथा च पाणिनीयशिक्षायामपि प्रोक्तम् – येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ।[109] एवमन्यैश्चापि प्रमाणैः भगवतः शिवस्य व्याकरणकर्तृत्वं सिद्ध्यति ।
2. इन्द्रः – अयं वै देवानां राजा अस्ति । अस्य व्याकरणसम्बन्धे तैत्तिरीयसंहितायामुक्तमस्ति – देवप्रार्थनातुष्टो देवराडिन्द्रो व्याकरणं व्याकृतवान् ।[110] अस्य विषये महाभारते प्रोक्तम् – इन्द्रो वै ब्रह्मणः पुत्रो कर्मणा क्षत्रियोऽभवत् ।[111]
3. वायुः (8500 वि.पू.) – इन्द्रदेवः वाणीं व्याकृतवान् आसीत्, स इन्द्रः अपि व्याकरणं वायुना लब्धवान् आसीत् ।[112] भगवान् वायुः शब्दशास्त्रविशारदः इति वायुपुराणे प्रोक्तमस्ति ।[113] वायुपुत्रस्य श्रीहनुमतः विषये अपि रामायणे रावणमुखेन प्रोक्तमस्ति –

**नूनं व्याकरणं कृत्स्नं ह्यनेन बहुधा श्रुतम् ।**
**बहु व्याहरताऽनेन न किञ्चिदपभाषितम् ।।**[114]

---

108 महाभा.शान्ति. 284-92

109 पा.शि.57

110 तैत्ति.सं.6-4-6

111 महाभा.शान्ति.22-11

112 तैत्ति.सं.6-4-6

113 वायु.पु.2-44

114 बा.रामा.किष्कि.का.3-29

4. **भरद्वाजः (9300 वि.पू.) –** भरद्वाजः बृहस्पतेः पुत्रः आसीत् । अयं न केवलं व्याकरणस्य अपितु बहूनां शास्त्राणां प्रवक्ता आसीत् । अस्य एकविंशतिः पुत्राः आसन् – एकविंशतिः भारद्वाजम् ।[115] एनेन भारद्वाजव्याकरणं लिखितमासीत् ।

5. **भागुरिः (4000 वि.पू.) -** यद्यपि अष्टाध्यायीग्रन्थे अस्य उल्लेखः नास्ति तथापि –

**वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।**
**आपं चैव हलन्तानां यथा वाचा निशा दिशा ।।**[116]

अनेन एतस्य आचार्य विषये अस्माभिः ज्ञायते । एवमेव शब्दशक्तिप्रकाशिकायाम् –

**हन्तेः कर्मण्युपष्टम्भात् प्राप्तुमर्थे तु सप्तमीम् ।**
**चतुर्थीं बाधिकामाहुश्चूर्णिभागुरिवाग्भटाः ।।**[117]

6. **पौष्करसादिः (3100 वि.पू.) –** चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम्।[118] एतेन वचनेन अस्य आचार्यस्य विषये ज्ञायते । पदमञ्जर्यामपि अस्य विषये हरदत्तेन प्रोक्तमस्ति यदयं प्राग्देशवासी इति ।[119]

7. **चारायणः (3100 वि.पू.) -** महाभाष्यकारेण एतस्य स्मरणं कृतमस्ति – कम्बलचारायणीयाः, ओदनपाणिनीयाः, घृतरौढीयाः । एतेन प्रकारेण अस्य व्याकरणाचार्यत्वं सिद्ध्यति ।

8. **काशकृत्स्नः (3100 वि.पू.) -** काशकृत्स्नस्य धातुपाठः व्याकरणं च आधुनिके काले उपलब्धे स्तः । वोपदेवकृते कविकल्पद्रुमे एतेन सह अष्टौ शाब्दिकाः स्वकीये कविकल्पद्रुमे वर्णिताः ।

9. **शन्तनुः (3100 वि.पू.) -** एतस्य आचार्यस्य फिट्सूत्राणि अधुना सिद्धान्तकौमुद्यां स्वरप्रकरणे वयं द्रष्टुं शक्नुमः । किन्तु तद् अतिरिच्य, एतद्रचितं व्याकरणं हि अधुना नोपलब्धम् अस्ति ।

---

115 काशि. 2-1-19

116 वै.सि.कौ.मू.मा. 50 पृष्ठे

117 शब्द.श.प्रका. वारा.संस्कर.

118 वै.सि.कौ.मू.मा.12 पृ.

119 काशिका.पद.मञ्ज. भा.1, पृ. 409

10. **वैयाघ्रपद्यः (3100 वि.पू.) –** अयम् आचार्यः अपि पाणिनेः पूर्ववर्ती आसीत् । अस्य अष्टाध्यायीग्रन्थे उल्लेखः नास्ति । महाभारते अस्य विषये प्रोक्तमस्ति –

**व्याघ्रयोन्यां ततो जाताः वशिष्ठस्य महात्मनः ।**
**एकोनविंशतिः पुत्राः ख्याताः व्याघ्रपदादयः ।।**[120]

व्याघ्रपादीयम् इति एतस्य व्याकरणसम्बद्धा कृतिः अस्ति । काशिकायामुक्तम् – दशकाः व्याघ्रपदीयाः ।[121]

11. **माध्यन्दिनिः-(3000 वि.पू.) –** काशिकाग्रन्थद्वारा अस्य आचार्यस्य विषये उल्लेखः प्राप्यते – सम्बोधने तूशनतस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम् ।
माध्यन्दिनिर्विष्टि गुणं त्विगन्ते नपुंसके व्याघ्रपदां वरिष्ठः ।।[122]

एतस्य व्याकरणलम्बद्धमतस्य वीक्षणेन मयं निश्चयं कर्तुं शक्नुमो यत् अयं अपि कश्चित् महान् शाब्दिकः आसीत् । अनेनैव च शुक्लयजुर्वेदसंहिताया अपि प्रवचनं कृत् आसीत् ।

12. **रौढिः –( 3000 वि.पू.) -** एषः अपि आचार्यः वैयाकरणः आसीत् । अष्टाध्याय्याम् अस्य अनुपलब्धिः अस्ति । किन्तु तथापि यत्र तत्र अस्य नाम प्राप्यते । अयं काशिकाकार-आपिशलि-पाणिनिप्रभृतीनाम् आचार्याणां समानः आसीत् ।

13. **शौनकिः (3000 वि.पू.) –** अस्य आचार्यस्य नाम चरकसंहितायाः टीकाकर्त्रा श्रीजज्जटेन निदर्शितमस्ति ।

एतेन अस्य शाब्दिकत्वं लक्ष्यते ।

14. **गौतमः (3000 वि.पू.) -** पाणिनिशास्त्रे अस्य अपि नाम न प्राप्यते , किन्तु पतञ्जलिमुनेः महाभाष्ये अस्य स्मरणं कृतमस्ति –
आपिशलपाणिनीयव्याडीयगौतमीयाः ।[123] तैत्तिरीये प्रातिशाख्ये

---

120 महाभा.अनु.53-30

121 काशि.4-2-65

122 तत्रैव 6-1-94

123 म.भा.1-1-63

प्लाक्षिकौण्डिन्यपौष्करसादिभिस्सह गौतम इति निर्देशः उपलभ्यते , तेन च निश्चीयते यत् गौतमः पाणिनेः पूर्ववर्ती आचार्यः आसीद् इति । अनेन गौतमीशिक्षा गौतमधर्मशास्त्रम् इत्यादयो ग्रन्थाः विरचिताः ।

15. **व्याडिः (2950 वि.पू.) -** अस्य महापुरुषस्य नाम महाभाष्ये[124] प्राप्यते । अस्य विषये अन्यत्र अपि ग्रन्थेषु चर्चा उपलभ्यते । अयं पाणिनेः मातुलः आसीत् । अयमेव लक्षश्लोकात्मकं प्रसिद्धं सङ्ग्रहाख्यं ग्रन्थं रचितवान् आसीत् । परन्तु ग्रन्थोयं नाधुना उपलभ्यते । व्याडीयपरिभाषावृत्तिः, अमरकोशटीका,परिभाषापाठः,लिङ्गानुशासनम् इत्यादयः ग्रन्थाः अप्यनेन विरचिताः ।

- अयं पाणिनेः पूर्ववर्तिनाम् आचार्याणां संक्षिप्तरूपेण परिचयः आसीत् । एतेषां महाभाष्यकाशिकादिग्रन्थेषु आदरपूर्वकम् उल्लेखः कृतः, येन बोद्धुं शक्यते यत् एतेषाम् अपि व्याकरणशास्त्रसम्बन्धिग्रन्था आसन् । किन्तु अष्टाध्याय्याम् एते अनुक्ताः सन्ति ।

  पाणिनिना प्रोक्तानां दश आचार्याणां नामानि एतानि सन्ति –

  1. आपिशलिः- वा सुप्यापिशलेः[125]
  2. काश्यपः – तृषिमृषिकृषेः काश्यपस्य[126]
  3. गार्ग्यः – अड् गार्ग्यगालवयोः[127] ओतो गार्ग्यस्य[128]
  4. गालवः – तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य[129]
  5. चाक्रवर्मणः - ई चाक्रवर्मणस्य[130]
  6. भारद्वाजः – अयमष्टाध्याय्यां न प्रोक्तः,यः प्रोक्तः स अन्यः भारद्वाजः अस्ति।

---

[124] तत्रैव 3-2-36

[125] पा.सू.6-1-92

[126] पा.सू. 1-2-25

[127] पा.सू. 7-3-99

[128] पा.सू.8-6-20

[129] पा.सू.7-1-74

[130] पा.सू.6-1-130

7. शाकटायनः – लङः शाकटायनस्यैव[131], व्योर्लघुप्रयत्नतरः शाकटायनस्य[132], त्रिप्रभृतिषु शाकटायनस्य[133] ।
8. शाकल्यः – सम्बुद्धौ शाकल्यस्येतावनार्षे[134], इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च[135] लोपश्शाकल्यस्य[136] सर्वत्र शाकल्यस्य[137]
9. सेनकः – गिरेश्च सेनकस्य[138]
10. स्फोटायनः – अवङ् स्फोटायनस्य[139]

एते आचार्याः पाणिनेः अष्टाध्याय्यां समुक्ताः अतः एते तस्मात् पूर्ववर्तिनः आसन् इति निश्चीयते । अत्र अस्माभिरेषां नामोच्चारणमेव कृतं न च विस्ताररूपेण परिचयो दत्तः । यतो हि महान् विस्तारः व्याकरणेतिहासस्य,अतः अस्माभिस्सूक्ष्ममार्गेण भाव्यम् । इत्नन्तरं पाणिनिः यः अस्य इतिहासस्य केन्द्रबिन्दुः अस्ति तस्य परिचयः अत्र संक्षेपेण दीयते ।

**महान् व्याकरणाचार्यः पाणिनिमहोदयः (सामान्यपरिचयः) -**

अधुनातने काले यदि व्याकरणशास्त्रस्य विषयः गृह्यते तत्पाणिनीयमेव सर्वैरवबुद्ध्यते । पाणिनिव्याकरणमष्टाध्यायीरूपम् एव सर्वैरादृतं मतं च । अस्य षण्नामानि उपलभ्यन्ते –

1. पाणिनः[140] ।
2. पाणिनिः – एतन्नाम तु स्वतः एव प्रसिद्धमस्ति ।
3. दाक्षीपुत्रः – सर्वे सर्वपदादेशाः दाक्षीपुत्रस्य पाणिनेः[141]- इति महाभाष्ये लिखितमस्ति ।

---

131 पा.सू.3-4-111
132 पा.सू.8-6-18
133 पा.सू. 8-4-50
134 पा.सू.1-1-16
135 पा.सू.6-1-126
136 पा.सू.8-3-19
137 पा.सू.8-4-51
138 पा.सू.5-4-11
139 पा.सू.3-1-123
140 काशि.6-2-14

4.शालङ्किः –पाणिनेः इदं नाम केवलं कोशग्रन्थेष्वेवोपलभ्यते । एवञ्च श्रीपतञ्जलिः अपि महाभाष्ये *शालङ्केर्यूनश्छात्राः शालङ्काः* इति निर्देशं कृतवान् ।
5. शालातुरीयः - एतदपि नाम अस्य बहु प्रचलितमस्ति ।
6. आह्निकः - श्रीपुरुषोत्तमदेवकोषे एव अस्य नाम्नः प्रमाणं प्राप्यते ।

**पाणिनिवंशपरम्परा –**

यदि वयं महाभाष्यस्य अवलोकनं कुर्मः तदा निश्चिनुमः यत् तत्र दाक्षीपुत्रशब्दस्य प्रयोगः पाणिनेः कृते अस्ति । अत एतेन ज्ञायते यत् पाणिनेः मातुः नाम दाक्षी आसीत् । तथा च दाक्षी दक्षकुलस्य आसीत् इत्यपि तस्याः नाम्नाः एव स्पष्टीभवति । तथा च व्याडिः यस्य अपरं नाम दाक्षायणः इति आसीत् , दाक्षी तेन कुलेन सम्बद्धा आसीत् । यतो हि महाभाष्ये अपि प्रयोगः प्राप्यते – शोभना खलु दाक्षायणस्य सङ्गृहस्य कृतिः। अतः एतद्दृष्ट्वा नैके विद्वान्सः व्याडिं पाणिनेः मातुलं मन्यन्ते, अपरे च मातुलस्य पुत्रं मन्यन्ते । अतः एतत् वक्तुं शक्यते यत् दाक्षेः पिता व्यडः आसीत् इति । तथा च कथासरित्सागरे प्रथमे कथापीठलम्बके चतुर्थतरङ्गे पाणिनेः गुरोः नाम वर्ष इति उल्लिखितः –

**अथ कालेन वर्षस्य शिष्यवर्गो महानभूत् ।**
**तत्रैकः पाणिनिर्नाम जडबुद्धितरोऽभवत् ।।**[142]

तथैव च पाणिनेः शिष्यः अपि कश्चित् कौत्सनामकः शिष्यः आसीत् इति महाभाष्येन अनुमातुं शक्यते – उपसेदिवान् कौत्सः पाणिनिम् ।[143] शालातुरीयः इति पाणिनेः नाम्ना अभिज्ञातुं शक्यते यत् तस्य ग्रामस्य नाम शलातुरः आसीत् । अधुना पाकिस्तानेन अधिकृते लाहौरे शलातुरो ग्रामः वर्तते । सिंहो व्याकरणस्य कर्तुरहरत् प्राणान् प्रियान् पाणिनेः - इत्यक्त्या ज्ञातुं शक्यते यत् अस्य मृत्युः सिंहेन अभवत् । पाणिनेः समयनिर्णयस्य प्रयासः – पश्चिमदेशीयाः विद्वान्सः पाणिनेः कालं विक्रमात् 656 इति समयतः 258 विक्रमवर्षपूर्वं यावत् मन्यन्ते ।

**बहुभिः ग्रन्थकारैः पाणिनेः प्रशंसा –**

---

141 म.भा.1-1-20

142 कथा.सरि.सा.श्लो.20

143 तत्रैव 3-2-108

तत्र श्रीपाणिनेः अष्टाध्याय्याः प्रसन्नैः सर्वैरेव प्रशंसितो महर्षिपाणिनिः । पातञ्जले भाष्ये **उदक् च विपाशः**[144] इति सूत्रस्य व्याख्याने श्रीपतञ्जलिः आश्चर्येण वक्ति – महती सूक्ष्मेक्षिका वर्तते सूत्रकारस्य । पुनरपि – तत्र वर्णेनाप्यनर्थकं न भवितव्यं किं पुनरियता सूत्रेण ।[145] अष्टाध्याय्यां न केवलं लौकिकशब्दसाधनाय सूत्राणि सन्ति अपितु वैदिकशब्दसाधनाय तेषां स्वरसाधनाय चापि सूत्राणि सन्ति ।

**पाणिनेः सम्प्रदायः -** महर्षिः पाणिनिः माहेश्वरसम्प्रदायस्य आसीत् । यतोहि सः भगवन्तं शिवमाराध्य तस्य प्रसादाद् एव चतुर्दशसूत्राणि प्राप्तवान् , तानि च सूत्राणि आश्रित्य अष्टाध्यायीं रचितवान् ।

**मङ्गलाचरणपरम्परा –** महर्षिः पाणिनिः मङ्गलाचारपरम्परया युक्त आसीत् । अत एव स स्वीये ग्रन्थे आदौ **वृद्धिरादैच्**[146] मध्ये **भूवादयो धातवः**[147] अन्ते च **नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम्**[148] इत्येतैः मङ्गलाचरणं कृतवान् । आदौ सूत्रे वृद्धिशब्दः, मध्ये वकारागमः, अन्ते च उदयशब्दः अत्र मङ्गलरूपेण प्रयुक्ताः । एतदेव दृष्ट्वा पतञ्जलिरुक्तवान् – मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषाणि भवन्त्यायुष्मत्पुरुषाणि च ।[149]

एवञ्च अष्टाध्याय्याः पाठपरिकल्पनाविषये यदि पश्यामः तदा त्रयः पाठाः मन्यन्ते । यथा -1. प्राच्यपाठः। 2. उदीच्यपाठः।3. दाक्षिणात्यपाठः ।

अष्टाध्याय्यां पूर्वं 3996 सूत्रसङ्ख्या आसीत् परन्तु अधुना 3983 इत्येव सूत्रसङ्ख्या उपलभ्यते ।

पाणिनिव्याकरणस्य अष्टकम्, अष्टाध्यायी,शब्दानुशासनम्, वृत्तिसूत्रञ्च इत्येतानि नामानि सन्ति ।

**पाणिनिना कृताः रचनाः –**

अष्टाध्यायी

---

144 पा.सू.4-2-74

145 म.भा.पस्प.

146 पा.सू.1-1-1

147 पा.सू.1-3-1

148 पा.सू. 8-4-67

149 म.भा.पस्प.

धातुपाठः

गणपाठः

लिङ्गानुशासनम्

शिक्षाग्रन्थश्च

काव्यम्- जाम्बवतीविजयम् पाणिनेः काव्यरचना अस्ति ।

इति पाणिनिपरिचयः सामान्यरूपेण प्रोक्तः ।

व्याडिः अपि प्रमुखः व्याकरणस्य विद्वान् आसीत् विक्रमात् 2800 वर्षपूर्वः ।

अधुना वयं पाणिनेः परवर्तिवैयाकरणानां विषये चर्चां कुर्मः –

**अष्टाध्याय्याः वार्तिककाराः –**

कात्यायनः

भारद्वाजः

सुनागः

क्रोष्टा

वाडवः

व्याघ्रभूतिः

वैयाघ्रपद्यः इति ।

**वार्तिकानां भाष्यकर्तारः**

1. हेलाराजः
2. राघवसूरिः
3. राजरुद्रः

**महाभाष्यकारस्य पतञ्जलेः सामान्यपरिचयः -**

पतञ्जलिः योगशास्त्रस्य ग्रन्थम्, अष्टाध्याय्याः भाष्यम् , आयुर्वेदसम्बन्धिग्रन्थं च लिखितवान् । सम्पूर्णेSपि व्याकरणशास्त्रे अस्य महाभाष्यस्य प्रामाणिकतां सर्वे जनाः सादरं स्वीकुर्वन्ति । यथा चोक्तं विरजानन्दस्वामिना –

**अष्टाध्यायीमहाभाष्ये द्वे व्याकरणपुस्तके।**
**तदन्यत्पुस्तकं यत्तु तत्सर्वं धूर्तचेष्टितम् ।।**

श्रीमत्पतञ्जलिः कुत्रापि स्वग्रन्थेषु स्वविषये वा किञ्चिदपि उल्लेखं न कृतवान् । तथापि किंवदन्तीरूपेण ज्ञायते यदसौ शेषनागस्य अवतारः आसीत् । अस्य समयस्य विषये किमपि प्रमाणं नास्ति । युधिष्ठिरमीमांसकेन बहुविधैः यत्नैः अस्य कालनिर्णयस्य प्रयासः कृतः – अमुष्यकालः विक्रमपूर्वतः 1200 वर्षाद् उत्तरकालिकः कथमपि नैव भवितुं शक्नोति ।[150] अस्य स्थानस्य विषये अपि कोऽपि निश्चयः नास्ति । किन्तु नैकवारं महाभाष्ये – काश्मीरं यास्यामः सक्तून् पास्यामः – इत्यादिकं दृष्ट्वा तथा च कश्मीरस्य राज्ञा पौनःपुन्येन महाभाष्योद्धारं वीक्ष्य अनुमानं कर्तुं शक्नुमः , यदस्य देशः काश्मीरः भवितुं शक्यते । किन्तु एतत्सर्वं सन्दिग्धम् एवास्ति ।

**श्रीनागेशभट्टस्तद्रचनाश्च – (1600-1800 ई.)**

**सूक्ष्मपरिचयः –** अयं महाराष्ट्रदेशीयः ऋग्वेदशाखाध्यायीदेशस्य ब्राह्मणः आसीत् ।[151] अस्य अधिकतमः कालः काश्यां व्यतीतः । अस्य पित्रोः नामनी – शिवभट्टसुतो धीमान् सतीदेव्यास्तु गर्भजः ।[152] अर्थात् अस्य पितुः नाम शिवभट्टः मातुः नाम च सतीदेवी आसीत् । नागेशस्य सन्ततिः नासीत् , अतः सः स्वलिखितग्रन्थौ एव कन्यायाः पुत्रस्य च रूपेण मतवान् – शब्देन्दुशेखरं पुत्रं मञ्जूषां चैव कन्यकाम् । स्वमतौ सम्यगुत्पाद्य शिवयोरर्पितौ मया ।।[153] अस्य आजीविकाविषये स्वयम् अनेन एव प्रोक्तम् – शृङ्गीवेरपुराधीशाद् रामतो लब्धजीविकः ।[154] अयं जीवनस्य अन्तिमकाले सन्यासं धृतवान् । अस्य गुरोः नाम हरिदीक्षितः आसीत् । हरिदीक्षितः भट्टोजिदीक्षितस्य पौत्रः वीरेश्वरस्य पुत्रश्चासीत् । नागेशभट्टस्य वैद्यनाथपायगुण्डे इति प्रमुखशिष्यः आसीत् ।

**रचनाः[155] –**

---

150 व्या.शा.इति. 50 पृ.

151 संस्कृ.व्या.दर्श.के विवि.सो.

152 लघु.श.शे.मङ्ग.श्लो.

153 तत्रैवान्तिममङ्गलाचरणे

154 लघु.श.शे. मङ्ग.श्लो.

155 व्याक.शा.इति. 55 पृ

1. महाभाष्यस्य प्रदीपोद्योतः
2. लघुशब्देन्दुशेखरः
3. बृहच्छब्देन्दुशेखरः
4. परिभाषेन्दुशेखरः
5. लघुमञ्जूषा
6. परमलघुमञ्जूषा
7. स्फोटवादः
8. महाभाष्यप्रत्याख्यानसङ्गृहः इति ।

**व्याकरणाद् अतिरिक्ताः रचनाः अपि सन्ति नागेशस्य –**

1. धर्मशास्त्रम्
2. दर्शनम्
3. ज्यौतिषशास्त्रम्
4. अलङ्कारशास्त्रञ्च इति ।

इत्येवं श्रीनागेशभट्टस्य सामान्यपरिचयः प्रस्तुतः ।

**इतोऽनन्तरं वयम् अष्टाध्याय्याः प्रक्रियाग्रन्थकाराणां विषये चर्चां कुर्मः –**

पाणिन्याष्टाध्याय्यां सूत्राणां वैज्ञानिकक्रमो व्यवस्थापितः अस्ति । किचित्कालानन्तरं च क्रममम‌ुं विच्छिद्य कार्यकालविधिवुधिमनुसरद्भिः बुधैः प्रक्रियाग्रन्थाः विरचिताः । अत्र मुख्यप्रक्रियाग्रन्थकर्तृणां नामानि तेषां समयः, तेषां रचनाश्च प्रस्तूयन्ते –

| **ग्रन्थकर्ता** | **समयः** | **ग्रन्थः** |
|---|---|---|
| धर्मकीर्तिः | 1140 वि.सं. प्रायः | रूपावतारः |
| अज्ञातनामा | 1300वि.सं.पूर्व | प्रक्रियारत्नम् |
| विमलसरस्वती | 1400 वि.सं.पूर्व | रूपमाला |
| रामचन्द्रः | 1450 वि.सं. | प्रक्रियाकौमुदी |

प्रक्रियाकौमुदी एतेषु ग्रन्थेषु नितरां प्रसिद्धा अभवत् । एवञ्च तस्याः नैके व्याख्यातारः अपि कालान्तरे जाताः । अद्यत्वे प्रसिद्धस्य सिद्धान्तकौमुदीग्रन्थस्य आधारभूतग्रन्थः प्रक्रियाकौमुदी एव अस्ति । अस्य व्याख्यातृणां परिचय एवमस्ति –

| व्याख्याता | समयः | व्याख्याग्रन्थः |
|---|---|---|
| शेषकृष्णः | 1465 वि.सं. | प्रक्रियाप्रकाशः |
| चक्रपाणिदत्तः | 1500-1550 वि.सं. | प्रक्रियाप्रदीपव्याख्या |
| विट्ठलः | 1520 वि.सं. | प्रक्रियाप्रसादटीका |
| अप्पननैनार्यः | 1520-1560 वि.सं. | प्रक्रियादीपिका |
| भट्टोजिदीक्षितः | 1560-1650 वि.सं. | सिद्धान्तकौमुदी |

एतेषु सिद्धान्तकौमुदीग्रन्थः महान् प्रसिद्धः अस्ति आधुनिके व्याकरणक्षेत्रे । तस्य मुख्याः व्याख्याकर्तारः इमे सन्ति -

| व्याख्याता | समयः | व्याख्या |
|---|---|---|
| ज्ञानेन्द्रसरस्वती | 1550-1600 वि.सं. | तत्त्वबोधिनी |
| भट्टोजिदीक्षितः | 1560-1650 वि.सं. | प्रौढमनोरमा |
| नीलकण्ठवाजपेयी | 1600-1675 वि.सं. | सुखबोधिनी |
| रामानन्दः | 1680-1720 वि.सं. | तत्त्वदीपिका |
| रामकृष्णभट्टः | 1715 -1720 वि.सं. | रत्नाकरटीका |
| नागेशभट्टः | 1730-1810 वि.सं. | लघुशब्देन्दुशेखरः |
| नागेशभट्टः | 1730-1810 वि.सं. | बृहच्छब्देन्दुशेखरः |
| वासुदेववाजपेयी | 1740-1800 वि.सं. | बालमनोरमा |
| रङ्गनाथयज्वा | 1745-1800 वि.सं. | पूर्णिमाटीका |

एतदतिरिच्यापि बह्व्यष्टीकाः सिद्धान्तकौमुद्याः अद्यत्वे उपलब्धाः सन्ति ।
अधुना पाणिनेः परवर्तिनो ये आचार्याः आभूवन् तेषां नामसङ्कीर्तनं तेषां समयः तेषां रचनाश्च अत्र प्रस्तूयन्ते –

| | ग्रन्थकारः | समयः | व्याकरणग्रन्थः |
|---|---|---|---|
| 1 | कातन्त्रकारः | 2000 वि.सं. | कातन्त्रव्याकरणम् |
| 2 | चन्द्रगोमी | 1000 वि.सं.पूर्वः | चान्द्रव्याकरणम् |
| 3 | क्षपणकः | अज्ञातकालः | क्षपणकमहान्यासः |
| 4 | देवनन्दी (जैनेन्द्रः) | 500 वि.सं. पूर्वः | जैनेन्द्रव्याकरणम् |

| | | | |
|---|---|---|---|
| 5 | वामनः | 600 वि.सं. पूर्वः | विश्रान्तविद्याधरः |
| 6 | भट्टाऽकलङ्कः | 650-800 वि.सं. | अज्ञातः |
| 7 | पाल्यकीर्तिः (शाकटायनः) | 871-924 वि.सं. | श्रीपदश्रवणः |
| 8 | शिवस्वामी | 914-940 वि.सं. | अज्ञातः |
| 9 | भोजदेवः | 1075-1110 वि.सं. | सरस्वतीकण्ठाभरणम् |
| 10 | बुद्धिसागरसूरिः | 1080 वि.सं. | पञ्चग्रन्थी |
| 11 | भद्रेश्वरसूरिः | 1200 वि.सं. | दीपकम् |
| 12 | वर्धमानः | 1150-1225 वि.सं. | वर्धमानव्याकरणम् |
| 13 | हेमचन्द्रसूरिः | 1145-1229 वि.सं. | सिद्धहैमशब्दानुशासनम् |
| 14 | मलयगिरिः | 1188-1250 वि.सं. | शब्दानुशासनम् |
| 15 | क्रमदीश्वरः | 1300 वि.सं.पूर्वः | सङ्क्षिप्तसारम् |
| 16 | अनुभूतिस्वरूपः | 1260 वि.सं. | सारस्वतव्याकरणम् |
| 17 | बोपदेवः | 1325-1360 वि.सं. | बोपदेवनामकं लघुतन्त्रम् |
| 18 | पद्मनाभदत्तः | 1500 वि.सं. | सुपद्मव्याकरणम् |

एते व्याकरणग्रन्थकाराः अस्माभिः व्याकरणशास्त्रस्येतिहासः इति पुस्तके अन्वेषणं कृत्वा अत्र निदत्ताः । अन्येषाम् अपि व्याकरणकर्तृणां नामानि तत्र स्मृतानि सन्ति । यद्यपि एतेषां ग्रन्था अधुना न दृश्यन्ते तथापि पुण्यस्मरणाय तेषां नामानि अत्र कीर्तनीयान्येव –

| | **ग्रन्थकर्ता** | **ग्रन्थः** |
|---|---|---|
| 1 | शुभचन्द्रः | चिन्तामणिव्याकरणम् |
| 2 | बालरामः | प्रबोधप्रकाशव्याकरणम् |
| 3 | भरतसेनः | द्रुतबोधव्याकरणम् |

| | | |
|---|---|---|
| 4 | रामकिङ्करः | आशुबोधव्याकरणम् |
| 5 | विनयसुन्दरः | भोजव्याकरणम् |
| 6 | रामेश्वरः | शुद्धाशुबोधव्याकरणम् |
| 7 | नरहरिः | बालबोधव्याकरणम् |
| 8 | चिद्रूपाश्रमः | दीपव्याकरणम् |
| 9 | विज्वलभूपतिः | प्रबोधचन्द्रिकाव्याकरणम् |
| 10 | रूपगोस्वामी | हरिनामामृतव्याकरणम् |
| 11 | जीवगोस्वामी | हरिनामामृतव्याकरणम् |
| 12 | काशीश्वरः | ज्ञानामृतव्याकरणम् |
| 13 | शिवप्रसादः | शीघ्रबोधव्याकरणम् |
| 14 | नारायणसुरनन्दः | कारिकावलीव्याकरणम् |

इत्येतेषां पाणिनेः पूर्ववर्तिनाम् आचार्याणां नामानि अस्माभिः यथाध्ययनं चात्र समाशीलितानि । वस्तुतः व्याकरणशास्त्रस्य इतिहासः विशालः अस्ति । अत्र नैके विषयाः सन्ति विख्यापनस्य चिन्तनस्य लेखनस्य च , किन्तु तस्य वैस्तीर्ण्यस्य अत्र अवसरः नास्ति । बहवो विषयाः यथा खिलपाठाः परिभाषापाठाः धातुपाठाः इत्यादयः तादृशाः विषयाः सन्ति येषां कर्तृणां व्याख्यातृणां प्रवर्तकानां तेषां इतिहासस्य च महद् वर्णनं कर्तुंम शक्यते, किन्तु अस्माभिः अत्र इतिहासस्य यः क्रमः निश्चितीकृतः सोSपि सामान्यरूपेण व्याकरणशास्त्रस्य पन्थानं दर्शयत्येव । अस्माभिरत्र पाणिनेः पूर्ववर्तिनाम् आचार्याणां तात्कालिकानाम् आचार्याणां , तत्परवर्तिनाञ्चाचार्याणां परिचयः सामान्यरूपेण यथावीक्षितशास्त्रम् अत्र समुपस्थापितः। अनेन तुष्यन्तु समीक्षकाः विद्वान्स इत्यलम् ।